# KHĀDIRA GRHYA SŪTRA

with the commentary

**"SUTRARTHA BODHINI"**

OF

**SRI. PATTABHIRAMARYA**



# खादिरगृह्यसूत्रम् ।

श्रीपट्टाभिरामार्यविरचितया सूत्रार्थबोधिन्या वृत्त्या

साहितम् ।




*Published by:*
P. RAMADOSS,
Anandatandavapuram, Madras. (South India)





*Printed at:*
SRI VANI VILAS PRESS,
SRIRANGAM.

1955

जगद्गुरवः

॥ श्रीशृङ्गगिरिश्रीदक्षिणाम्नायव्याख्यासिंहासनाधिपतयः ॥



श्रीमदभिनवविद्यातीर्थश्रीचरणाः ।

ॐ

## ॥ श्रीशृङ्गेरी श्रीजगद्गुरुसंस्थानम् ॥

श्री
विद्याशङ्कर

श्रीमत्परमहंसपरिव्राजकाचार्यवर्यपदवाक्यप्रमाणपारावारपारीण-यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाध्यष्टाङ्गयोगानुष्ठाननिष्ठ तपश्चक्रवर्त्यनाद्यविच्छिन्न-श्रीशङ्कराचार्यगुरुपरम्पराप्राप्तषड्दर्शनस्थापनाचार्य - व्याख्यानसिंहासनाधीश्वर - सकलनिगमागमसारहृदयसाङ्ख्य-त्रयप्रतिपादक- वैदिकमार्गप्रवर्तक-सर्वतन्त्रस्वतन्त्रादिराजधानीविद्यानगर-महाराजधानीकर्णाटकसिंहासनप्रतिष्ठापनाचार्य - श्रीमद्राजाधिराजगुरु-भूमण्डलाचार्य - ऋष्यशृङ्गपुरवराधीश्वर - तुङ्गभद्रातीरवासि -श्रीमद्विद्याशङ्करपादपद्माराधक - श्रीजगद्गुरु - श्रीचन्द्रशेखरभारतीस्वामि-गुरुकरकमलसञ्जात—

### श्रीजगद्गुरु शृङ्गेरी श्रीमदभिनवविद्यातीर्थस्वामिभिः

अस्मत्प्रियतमान्तेवासिनां आनन्दताण्डवपुरनिवासिनां श्री-पट्टाभिरामार्याणां विषये विरचिताः श्रीमन्नारायणस्मरणपूर्वकाशिषः समुल्लसन्तु ।

भवद्भिः प्रणीतां खादिरगृह्यसूत्रवृत्तिं सूत्रार्थबोधिनीनाम्नीं अवालोकयाम । वृत्त्यामस्यामनतिसङ्क्षिप्तया अनतिविस्तृतया सरलया च शैल्या विवृतोऽर्थः । सूत्रकाराणामन्येषां गोभिलादीनां वचनोदाहरणेन परिहृताः संशयाः । पदार्थः तत्क्रमश्च तत्र तत्र सङ्गृहीतः । आवश्यकेषु स्थलेषु आचारभेदोऽपि प्रादर्शि । अनुक्तमन्यतो ग्राह्यमिति न्यायेन आभ्युदयिकादिकं कर्मप्रदीपवचनोपन्यासेन स्पष्टीकृतम् । सूत्रानुक्रमणिका चान्ते संयोजितेति सर्वतो रमणीयेयं 'सूत्रार्थबोधिनी' जिज्ञासूनुपकुर्यादिति विश्वसिमः । कलानिधिकलावतंसस्य अकम्पानुकम्पया सर्वेषामादरमवाप्य चिरतरं प्रकाशतामित्याशास्महे ॥

मन्मथ–चैत्र–द्वादशी भौमो वासरः ।
क्षेत्रम् – शृङ्गगिरिः ।

श्री

# उपोद्घातः

स्मार्तानि कर्माण्यनुतिष्ठासतां गृह्यसूत्राणि नान्तरीयकतया अवगन्तव्यानि, यत्कारणं, नियतशाखाध्यायिभिः अनुष्ठेयेषु स्मृति-विहितेषु कर्मविशेषेषु तत्तच्छाखागतानि मन्त्रजातानि गृह्यसूत्राण्येव विनियुञ्जते ।

तत्र सामशाखापराणां गृह्यसूत्राणां मध्ये जैमिनि-गोभिल-खादिरगृह्यसूत्राण्येव अद्यत्वे प्रचारपथे वरीवृत्यन्ते । द्राह्यायणगृह्य-सूत्राण्यपि अत्र सहगणनामर्हन्ति यद्यपि, तथापि तेषां खादिरसूत्रेभ्यः कार्त्स्न्यंशे विशेषराहित्यात् न पृथग्गणना ।

यजुषि तैत्तिरीयामेकां शाखामधिकृत्य बोधायनापस्तम्बादि-प्रणीतानि नाना गृह्यसूत्राणीव साम्नि कौथुमशाखामेकामधिकृत्य प्रवृत्ते गोभिलखादिरगृह्यसूत्रे । परन्तु तयोः पूर्वमुत्तरदेशीयाः [1] अन्यद्दक्षिणदेशीयाश्च कौथुमिनः प्रमाणयन्ति अनुष्ठानविषये । श्रौते कर्मण्यपि औत्तराहास्ते लाट्यायनश्रौतसूत्राणि, दाक्षिणात्यास्तु द्राह्यायणीयानि तानि प्रमाणीकुर्वन्ति । लाट्यायनद्राह्यायणश्रौतसूत्राणि शब्दतोऽर्थतश्च प्रायस्समानरूपतां मिथो भजन्ते यथा, तथा गोभिल-खादिरगृह्यसूत्राण्यपि परस्परं सारूप्यभाञ्जि बहुलमुपलभ्यन्ते । एवं तत्तद्देशीयपक्षपातविषयैरप्युभयैः गोभिलखादिरगृह्यसूत्रैः अभिन्ना एव मन्त्राः समानेषु कर्मसु विनियुज्यन्ते शाखासाम्यात् कर्मसाम्याच्च ।

---

1. It belongs to the Drahyayana school of Samaveda which prevails in the south of the Indian peninsula, and it is based on the Gobhiliya Sutra from which it has taken the greater number of its aphorisms, just as the Drahyayana Srou·tha Sutra as far as we can judge at present is nothing but a slightly altered redaction of Latyayana. (MAX MULLER)

[1] इयांस्तु विशेषः — सङ्ग्रहेण प्रवृत्तानां खादिरसूत्राणां विस्तरेण कृतानि गोभिलीयानि लघ्वी वृत्तिरिव भान्तीति । उभयेषाममीषां मया परिशीलने प्रसक्तिस्तु एवमघटिष्ट —

अस्मद्ग्रामवास्तव्याः तदानीं प्राड्विवाकपदवीमध्यूषिवन्तः श्रीसुब्रह्मण्यार्या विंशतेर्हायनेभ्यः पूर्वं मामेवमभ्यधुः — 'कर्मानुष्ठानप्रक्रिया अस्माकमिदानीन्तनी असमीचीना मम भाति । अत्र मूलं खादिरगृह्यसूत्राणां रुद्रस्कन्दप्रणीता वृत्तिरेव' इति । अस्मदाचारदूषणपरं, बहुतिथात्कालादारभ्य बहुभिर्बहुश्रुतैरदूषिततया लब्धप्रचारां रुद्रस्कन्दवृत्तिमप्यास्कन्दयदिदं तेषां वचनं आकर्णनसमकालमेव मम मनः अतितरामबाधत । श्रीसुब्रह्मण्यार्यास्तु इङ्गितेन मम विप्रतिपत्तिमवबुध्य पुनरपि — 'प्रतिदेशं प्रतिग्रामं च कर्मणामनुष्ठानसरणिः नैकविधा दृश्यते इति किं नाध्यक्ष्यते भवद्भिः ? अशास्त्रीयाप्येषा अनुष्ठातृणामज्ञानात् पारम्पर्येण आगतेति किं न संभाव्येत ? [2]अज्ञानमूलकत्वाच्चायमाचारः स्मृतिविरुद्धो न शिष्टाचारतया प्रमाणपदमारोढुमीष्टे । अनुष्ठातृबाहुल्यं, बहुकालवर्तित्वं च न शास्त्रबाह्यत्वमस्य प्रतिबन्धुमीशाते —' इति सयुक्तिकमवोचन् । मम तु तदानीं युक्ताप्युक्तिस्तेषां मम तैस्सह समदृष्टितां न केवलं नाजनयत्, अपि तु क्रोधं मनश्शल्यं चावर्धयत् ।

---

1. The Khadira Grhya has evidently been composed with the intention of abridging Gobhila's very detailed and somewhat lenghthy treatise on the domestic rites. (MAX MULLER).

2. "एवं शास्त्रविरोधे लोकाचारश्च त्याज्यः । तथा च कात्यायनः —

'स्मृतेर्वेदविरोधे तु परित्यागो यथा भवेत् ।
तथैव लौकिकाचारं स्मृतिबाधात्परित्यजेत् ॥'

इति । वसिष्ठोऽपि — 'श्रुतिस्मृतिविहितो धर्मस्तदलाभे शिष्टाचारः प्रमाणम्' इति । शास्त्रविरोधे शिष्टाचारो न प्रमाणमित्यर्थः । तथाह गौतमः — 'देशजाति-

तत आरभ्य रुद्रस्कन्दवृत्तिं मण्डयितुमना एव तां पर्यैचैषम्। परिचिन्वतो बहुमन्यमानस्यापि तां मम तदीया वास्तविकी स्थितिर्न तिरोऽभूत्। वृत्तिकार एष स्वाभिमतमर्थं सूत्रारूढं चिकीर्षुः सूत्राणि क्लेशयतीति मम मतिरुदभूत्। अथापि तदीयां व्याख्यां सोपष्टम्भां कर्तुकामः तदनुकूलानि स्मृतिवचनानि मृगयमाणोऽपि न केवलं तानि नालप्सि, अपि तु तत्प्रातिकूल्यानि बहूनि वचनान्यवाप्सम्। अनुकूलतया भासमानानां शाट्यायनकारिकादीनां गृह्यपरिशिष्टनाम्नः ग्रन्थस्य च दक्षिणदेशमात्रलब्धप्रचारस्य ऋषिप्रणीतत्वनिबन्धनं प्रामाण्यं न विचारमसहत। इत्थं साधकप्रमाणराहित्यात् बाधकबाहुल्याच्च वृत्तिकारोऽयं स्वदेशकालसिद्धं अप्रामाणिकमपि कंचनाचारं सूत्रारूढं कर्तुं प्रयतते इत्यनिच्छतोऽपि ममाभिप्रायस्समजनि।

अवसरेऽस्मिन् श्रीसुब्रह्मण्यार्याः गोभिलगृह्यसूत्रैः सहैव खादिरसूत्राणां विमर्शने मां न्ययूयुजन्। तदनु उभयानपि परामृशतो मम तदा तदा प्रतिभातानर्थान् तदुपोद्बलकतया लब्धैः कर्मप्रदीपनामककात्यायनस्मृतिगृह्यासङ्ग्रहापस्तम्बादिगृह्यसूत्रान्तरमनुस्मृतिप्रभृतिवचनैस्सह सङ्कलय्य समग्रहीषम्। सोऽयं प्रयत्नो मदीयोऽद्य सूत्रार्थबोधिनीनाम्ना मुद्रालयं प्रविश्य बहिरायातोऽस्ति।

मुद्रणात् पूर्वं पाठनिर्णयाय पुस्तकानि अन्विष्यति मयि माक्स्मुल्लर् महोदयैस्संपादितानां साङ्ग्लानुवादानां रोमन्लिपिलिखितानां खादिरसूत्राणां (29th Vol. the Sacred Books of the East) दर्शनं प्रासज्यत। तदनुवादस्थः प्रायिकः सूत्रार्थबोधिनीसंवादः मम प्रत्ययमात्मनि किंचिदिवावर्धयत्।

---

कुलधर्मा आम्नायैरविरुद्धाः प्रमाणम्' । " ( स्मृतिमुक्ताफलम् — विवाहप्रकरणम् )

वेदविदां महतामाशीर्बलेन लब्धात्मा वृत्तिरेषा यदि खादिर-सूत्राणां तत्त्वावधारणे श्लोकेनाप्युपकुर्यात् तदा जनोऽयमात्मानं कृतकृत्यं मन्वीत । अलक्ष्याः धर्मकामास्संमर्शिनः पण्डिता वृत्तावस्यां वर्तमानान् दोषानपनेतुं सर्वथा सर्वदा प्रभवन्ति । दोषापनयने तेषामुपायोपदेशं नम्रेण शिरसा स्वीचिकीर्षामि ।

न मात्सर्यान्न वैदग्ध्यमदान्नो वादकौतुकात् ।
किन्तु तत्वबुभुत्साया जाता सूत्रार्थबोधिनी ॥

पुस्तके चात्र प्रमाणवचनानामाकरस्थानानि यथोपलम्भं निर-दिक्षम् । गोभिलसूत्राणां सङ्ख्यापि भट्टभाष्यसहितं पुस्तकं (Published by the Metropolitan Printing and Publishing House, Calcutta) अनुसृत्य निर्दिष्टा वर्तते । स्मृतिमुक्ताफले, गोभिलसूत्रीयभट्टभाष्ये च स्मृत्यन्तरत्वेन गृह्यान्तरत्वेन च निर्दिष्टानि प्रमाणवचनानि अनान्विष्टमूलानि तथैवोदाहृतानि । आदितः आन्तात् खादिरसूत्राणां क्रमसङ्ख्या अदायि । वृत्तौ च तत्र तत्र पठितृणां सौकर्याय परामर्श्यानां परामर्श्यवृत्तीनां च सूत्राणां अङ्को निर्दिष्टः ।

सूत्राणां पाठनिर्णयाय अधो निर्दिश्यमानानि पुस्तकानि आदर्शीकृतानि । उचिततरं पाठं स्वीकृत्य अन्यान् पाठान्तरत्वेन तत्र तत्र नीचैरमुद्रापयम् ।

1. क. मुद्रितं सरुद्रस्कन्दीयम् Published by the G. O. Library, Mysore.
2. ख. ,, ,, पुना-आनन्दाश्रमेण प्रकाशितम्
3. ग. ,, सांग्लानुवादम् 29th Vol. Sacred Books of the East,

4. घ. तालपत्रमयं, मूलमात्रं, असंपूर्णम् । R. 665 (c) O. M. Library, Madras.

5. ङ. ,, ,, संपूर्णम् । 72489. Adyar library.

6. च. ,, ,, असंपूर्णम् । 68406. ,,

7. छ ,, ,, ,, D. 63. O. M. Library. Madras.

8. ज. ,, ,, ,, R. 75 ,, ,,

| | | | | | |
|---|---|---|---|---|---|
| 9. | झ. | ,, | मरुदस्कन्दीयं | संपूर्णम् । | मरुदूर् ब्रह्मश्री सन्तानशास्त्रिणां सकाशात् प्राप्तानि । |
| 10 | ञ. | ,, | ,, | ,, | |
| 11. | ट. | ,, | मूलमात्रं | ,, | |
| 12. | ठ | ,, | ,, | ,, | |

श्रीमुखवितरणेन मामनुगृह्य मदीयं परिश्रमं सफलीकृतवतां शृङ्गगिरिश्रीशारदापीठाधीश्वराणां अनन्तश्रीविभूषितानां **श्रीशंकराचार्यवर्याणां** पादारविन्दे भूयो भूयः प्रणमामि ।

गृह्यशास्त्रे मम प्रवृत्तेर्निदानभूतेभ्यः, विशदपरिशीलितगृह्यशास्त्रेभ्यः, भूमिकालेखनेन पुस्तकमिदमलंकृत्य मां भूयुपकृतवद्भ्यः **श्रीसुब्रह्मण्यार्यवर्येभ्यः** (Rtd. Dist. and Sessions Judge) मम प्रणतीस्सकृतज्ञभावं निवेदयामि ।

अनादरहतोत्साहं मामुत्साह्य ग्रन्थस्यास्य मुद्रापणे मां प्रावर्तयन्त सुलभतमसौहार्दाः सर्वतोमुखप्रतिभाः बहुश्रुताः अण्णामलै—विश्वविद्यालयाध्यापकाः **श्रीशिवरामकृष्णशास्त्रिमहोदयाः** । एतद्ग्रन्थविरचने मुद्रणे च सुबहु उपकृतवतां तेषां, मरुदूर् वास्तव्यानां प्रयोगकुशलानां **श्रीसन्तानशास्त्रिवर्याणां** च सविधे मदीयकृतज्ञतानिवेदनमात्रेण मदाधमर्ण्यं नापनीयेतेति हार्दमिदं वचनम् ।

महीशूरपुरीयप्राच्यविमर्शसंस्थायाः (Oriental Research Institute) अध्यक्षैः संदिग्धेषु स्थलेषु केषुचित् पाठप्रदर्शनेन कृतमुपकारं न कदाप्यहं विस्मर्तुं शक्नोमि ।

नूतनमपीमं ग्रन्थं निर्मत्सरं परिशील्य स्वाभिप्रायावेदनेन मदुत्साहं वर्धितवतां विद्वदुत्तंसानां सर्वदाहमधमर्णोऽस्मि ।

ग्रन्थामिमं महता आदरेण, अवधानेन, प्रयत्नेन च सुष्टु सम्मुद्र्य उपकृतवतां श्रीरङ्गम् – श्रीवाणीविलासमुद्रालयाधिकृतानां मदीयां कृतज्ञतामाविष्करोमीति शम् ॥

मन्मथज्येष्ठकृष्णनवमी ।
16—5—1955.
आनन्दताण्डवपुरम् ।

इत्थं
सामवेदिक्षेमकामः
वै. पट्टाभिरामः

शिवाभ्यां नमः ॥

# முன்னுரை.

பிரம்ஹஸ்ரீ பட்டாபிராமய்யரால் செய்யப்பட்டிருக்கிற இந்த காதிரகிருஹ்ய விருத்தியை பல தடவை பார்வையிட்டிருக்கிறேன். தர்மம் ஓங்கி வளரவேண்டுமென்ற எண்ணத்துடன் ஸஜாதீய ஸ்மிருதிகளை பரிசீலனம் செய்து, ஸ்வல்ப ஸம்ஸ்கிருத ஞானம் உள்ளவர்கள் கூட ஸுலபமாகத் தெரிந்து கொள்ளும்படி ஸூத்திரங்களின் சரியான அர்த்தத்தைத் தெளிவாக அவர் இந்த வியாக்யானத்தில் வெளியிட்டிருக்கிறார். ருத்ரஸ்கந்த விருத்தி என்று சொல்லப்படும் பழைய வியாக்யானம் பல விஷயங்களில் ஸூத்திர விரோதமாகவும், ஸூத்திரங்களின் அர்த்தத்தை ஸ்பஷ்டமாகத் தெரிவிக்காமலுமிருக்கிறபடியால், ஸ்ரீ பட்டாபிராமய்யர் இந்த விருத்திக்கு 'ஸூத்ரார்த்த போதினீ' என்று பெயரிட்டது மிகவும் பொருத்தமானதே. ஆகையால் காதிர கிருஹ்யத்தை அனுஸரிக்கும் எல்லா சந்தோகர்களுக்கும் இந்த கிரந்தம் மிகவும் ஆவச்யகம் என்பதில் ஸந்தேஹமே இல்லை.

ருத்ரஸ்கந்த விருத்தி சில இடங்களில் மாத்திரம் ஸூத்திரத்தையும், ஸ்மிருதிகளையும் அனுஸரித்திருக்கிறதே தவிர பல இடங்களில் ஸூத்திரத்திற்கும் ஸ்மிருதிகளுக்கும் விரோதமாகவே இருக்கிறது. ஆனால் தென் தேசத்திலுள்ள ஸாமவேதிகள் ஸூத்திரத்தை அனுஸரித்திருக்கும் [1]அம்சங்களை பெரும்பாலும் அனுஸரிப்பதே இல்லை. ஆனால் ஸூத்திரத்திற்கும் ஸ்மிருதி

1. விவாஹத்தில் வ்யஸ்தஸமஸ்தாஹுதிக்கு முன்பும், சருதந்திரத்தில் ஆஜ்ய பாகத்திற்கு முன்பும், வ்யாஹ்ருதி ஹோம நிஷேதம். உபரிஷ்டாத் தந்திரத்தில் ஸமஸ்தாஹுதி இல்லாமை. யக்ஞ வாஸ்துவுக்கு முன் அனுபர்யுக்ஷணம். முதலியவை.

களுக்கும் விருத்தமான [1]அம்சங்களையோ அதி சிரத்தையுடன் அனுஸரித்து வருகிறார்கள். மேலும் சாகாந்தரத்தைச் சேர்ந்த சாட்யாயன காரிகையையும் அனுஸரித்து கர்மாக்களை ஸூத்திர விரோதமாகவே அனுஷ்டானம்செய்து வருகிறார்கள். இம்மாதிரி ஆசாரம் சாஸ்திர விரோதமாக வளர்ந்து கொண்டிருக்கையில், யதோக்தமாக கர்மாக்களை ஆசரிப்பதற்கு உதவியாக பிரசுரிக்கப்பட்டிருக்கிற 'ஸூத்ரார்த்த போதினீ' என்ற இந்த விருத்தியை எல்லா சந்தோகர்களும் வரவேற்பார்கள் என்று எண்ணுகிறேன்.

காதிர கிருஹ்யத்தை அனுஸரிப்பவர்களும், கோபில கிருஹ்யத்தை அனுஸரிப்பவர்களும் கௌதும சாகையைச் சேர்ந்தவர்கள். இருவர்களுக்கும் மந்திர பிராமணம் ஒன்றே. இரண்டு கிருஹ்யங்களுக்கும் சில விஷயங்களில் வேற்றுமை இருந்தாலும் பெரும்பாலும் காதிர கிருஹ்யத்திற்கு கோபில கிருஹ்யம் விவரணம் போன்றே இருக்கிறது. 'सन्दिग्धश्च पदार्थः अन्यत्र निश्चितप्रयोगदर्शनान्निर्धारयितुं शक्यः' ( बृहदारण्यकभाष्यम् ४.३.७) என்ற பகவத்பாதாளுடைய வாக்ய பிரகாரம் காதிர ஸூத்திரங்களின் அர்த்தவிஷயத்தில் ஸந்தேஹம் வரும் இடங்களில், கோபில ஸூத்திர மூலமாகவே ஸந்தேஹத்தைப் போக்கிக் கொள்ளுவதுதான் உசிதமானது. கர்மாக்களை தன் கிருஹ்யத்தில் கூறப்பட்டுள்ள பிரகாரப்படியும், தன் கிருஹ்யத்தில் கூறப்படாத தேவையான கர்மாக்களை, அன்யஸ்மிருதி-ஸூத்ரங்களில் கூறப்பட்டுள்ள பிரகாரப்படியும் அனுஷ்டானம்

---

1. புத்ர ஸம்ஸ்காரத்தில் ஏகதேசாக்னி. அக்னி ஸந்தானத்தில் ஆஜ்யத்தால் ஸ்விஷ்டகிருத் ஹோமம். லாஜ ஹோமத்தில் உபஸ்தரணாபிகாரண நிஷேதம். நாமகரணத்தில் மந்திர மத்தியிலுள்ள असौ சப்தத்தில் பெயர் சொல்லாமை, உபநயனத்தில் மந்திரமில்லாமல் யக்ஞோபவீதம் தரித்தல். முதலியவை.

செய்ய வேண்டியதென்பது எல்லோருக்கும் தெரிந்த விஷயம். கிருஹ்யத்தையோ, ஸ்மிருதிகளையோ புறக்கணித்த ஆசரணம் சரிதார்த்தமாக ஆகாது என்பது தான் மஹரிஷிகளின் அபிப்பிராயம்.

'अक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कर्मकारिणाम् ।
अक्रिया च परोक्ता च तृतीया चायथाक्रिया ॥'

(அனுஷ்டானம் செய்பவர்கள் கர்மாக்களை விட்டுவிடுவதை வித்வான்கள் மூன்றுவிதமாகப் பிரித்துக் கூறியுள்ளார்கள். முதலாவது—கர்மாக்களை செய்யாமலேயே இருந்து விடுவது. இரண்டாவது—தன் சாகைக்கான பிரகாரத்தைப் புறக்கணித்து பிறசாகைக்கான பிரகாரப்படி செய்வது. மூன்றுவது—பிரமாண வசனங்களுக்கே முறணுகச்செய்வது.)

ஸ்மிருதி விருத்தமாக அனுஷ்டானம் செய்பவர்கள், தங்களுக்கு சாஸ்திரம் ஆதாரமாக இல்லாவிட்டாலும், பரம்பரையாக வந்த ஆசாரம் ஆதாரமாக இருக்கிறது என்று வாதம் செய்யக்கூடும். ஆனல் அந்த வாதத்தைப் பெரியோர்கள் ஒப்புக் கொள்ளுவதில்லை. ஏனென்றல் சிஷ்டாசாரத்தின் பிராமாண்யமே ஸ்மிருதியை அடிப்படையாகக் கொண்டுதான் எழுந்திருக்கிறது. ஸ்மிருதிக்கு விருத்தமான ஆசாரத்திற்கு பிராமாண்யம் கூற நாம் அதற்கு அனுகுணமான ஒரு ஸ்மிருதியைக் கற்பித்தால் அதை பிரத்யக்ஷமாகக் கிடைத்திருக்கும் ஸ்மிருதி நிராகரித்து விடுகிறது.

'स्मृतिमूलो हि सर्वत्र शिष्टाचारस्ततोऽत्र च ।
अनुमेया स्मृतिः स्मृत्या बाध्या प्रत्यक्षया तु सा ॥'

ஆகவே, சாஸ்திர விருத்தமான ஆசாரம் எவ்விதத்திலும் பிரமாணமாகாதாகையால் கர்மாக்களை

சாஸ்திர பிரகாரம் ஆசரித்தால்தான் யதோக்தமான பலனை அடையமுடியும்.

சந்தோகர்களுடைய தோஷம் நிறைந்த ஆசாரத்தைத்திருத்த வேண்டுமென்று எண்ணியே 'பலதாதா'வும் 'அந்தர்யாமி'யுமாகிய ஈச்வரன் வியாக்யாதாவின் மனதிற்குள் புகுந்து ஸூத்ரார்த்த போதினியை எழுதும்படி பிரேரணை செய்திருக்கிறார் போலும். சந்தோகர்களுடைய சிரேயஸ்ஸைக் கருதி அதிக சிரத்தையோடும், பிரயாஸத்தோடும் அதை எழுதிய ஸ்ரீ பட்டாபிராமய்யருக்கு நாம் எல்லோரும் கிருதக்ஞதையைத் தெரிவிக்கக் கடமைப்பட்டிருக்கிறோம்.

அவருக்கு பரம சிரேயஸ் உண்டாகட்டும் என்று ஈச்வரனைப் பிரார்த்திக்கிறேன்.

ஆனந்ததாண்டவபுரம்
1—4—55

**M. ஸுப்பிரமணிய அய்யர்,**
Retd. Dist. & Sessions Judge.

# सूत्रार्थबोधिनीविषये विदुषां अभिप्रायाः ॥

१

श्री. चिं. ग. काशीकरमहोदयाः
सहमन्त्रिणः
वैदिकसंशोधनमण्डलम्,
पूना ।

*9—5—1955*

श्रीमद्भिः पट्टाभिरामार्यमहोदयैः संपादितं स्वरचितवृत्तिसहितं खादिरगृह्यसूत्रमवलोक्य महान् सन्तोषो जातः । संस्कृतभाषानुबद्धं गभीरं साहित्यमिदानींतने कालेऽपि विरच्यत इति संस्कृतभाषाया जीवत्त्वे प्रबलं प्रमाणमिति विदांकुर्वन्तु सुधियः ।

छन्दोगानां गृह्यकर्मप्रतिपादकं गोभिलीयं खादिरं चेति सूत्रद्वयं विद्यते । तत्र द्राह्यायणश्रौतसूत्रानुसारिणां दाक्षिणात्यानां खादिरं, लाट्यायनश्रौतसूत्रानुसारिणामौदीच्यानां च गोभिलीयमिति। तयोः खादिरं गोभिलीयापेक्षया स्वल्पविस्तरम् । तत् प्रथमतः रोमन्लिप्या १८८६ खिस्ताब्दे ओल्डेनबर्गमहोदयेन (प्राच्यधर्मग्रन्थमालायां २९ खण्डे Sacred Books of the East Vol. XXIX.) आङ्ग्लभाषानुवादसहितं मुद्रापितमासीत् । तदेव रुद्रस्कन्दव्याख्यया सहितं मैसूरुनगरे १९१३ खिस्ताब्दे मुद्रितमासीत् । तस्यां व्याख्यायामुपलभ्यमानास्त्रुटीरनुलक्ष्य श्रीमद्भिः पट्टाभिरामार्यैः स्वकीया सूत्रार्थबोधिनी नाम वृत्तिर्विरचिता । तेषां छन्दोगशाखीयत्वात् खादिरसूत्रानुसारित्वाच्च विशेषतो वृत्तिविरचनाधिकारित्वं सिध्यत्येव । खादिरसूत्रस्य सम्यग्बोधार्थं वृत्तिं विरचय्य

तैः न केवलं तत्सूत्रानुसारिच्छन्दोगा अनुगृहीताः, अपि तु तत्त-च्छाखीयगृह्यकर्मजिज्ञासवस्सर्वे उपकृताः ।

मैसूरुपुस्तकसूत्रपाठस्य एतत्पुस्तकसूत्रपाठस्य च कचिदक्षर-भेदं विहाय सादृश्यमेव । किन्तु सूत्रच्छेदविषये तयोः विसंवादो बहुत्रोपलभ्यते । यद्यप्युभयोः पटलचतुष्टयगता सूत्रसङ्ख्या (५७९) समाना, तथापि प्रायः प्रतिपटलं प्रतिखण्डं च सा विभिन्ना दृश्यते । एतत्पुस्तकद्वयापेक्षयापि ओल्डेन्बर्ग्सम्पादितपुस्तके प्रतिपटलं प्रति-खण्डं च सूत्रसङ्ख्या विभिन्ना । तथा च सर्वेषु पटलेषु मिलित्वा सूत्रसङ्ख्यापि भिन्ना । तत्र एतत्पुस्तकावलम्बितः सूत्रच्छेदः प्रायो युक्तियुक्तो दृश्यते । लिखितपुस्तकानामुपयोगेन सूत्रपाठोऽत्र निश्चितः । अध्ययनसौकर्यार्थमन्ते अकारादिक्रमेण सूत्रसूच्यपि मुद्रिता ।

रुद्रस्कन्दीये सूत्रार्थबोधिन्यां च न केवलं सूत्रार्थः स्पष्टीकृतः । अपितु गृह्यविधिरपि पर्याप्तं विवृतः । तत्रापि सूत्रार्थबोधिनीविवरणं सुबोधतरं विस्तृततरं च प्रतिभाति । बहुषु स्थलेषु सूत्रार्थबोधिनी-तात्पर्यं रुद्रस्कन्दव्याख्यया विसंवदति । तत्र च सूत्रार्थबोधिनी-तात्पर्यं युक्ततरं प्रतिभाति । उदाहरणरूपेण 'देव सवितः प्रसुव…' (१. २. १९) 'प्रपदं जपित्वा…' (१. २. २१), 'मन्त्राभिवादात्तु…' (१. ३. ४), 'आनीयमानायां पाणिग्राहो…' (१. ३. ७) इत्यादिसूत्राणां वृत्तिर्द्रष्टव्या । 'इदं विष्णुरिति वा' (२. १. २३) इति सूत्रं मैसूरुपुस्तके नैवोपलभ्यते यद्यपि रुद्रस्कन्दीये तस्य तात्पर्यमुपलभ्यते । ओल्डेन्बर्ग्पुस्तके एतत्सूत्रं दृश्यते । रुद्रस्कन्दीयमतात् सूत्रार्थबोधिनीमते बहुत्र विभिन्नेऽपि एतद्वृत्तिकारेण रुद्रस्कन्दीयस्य साक्षान्निर्देशः कचिदेव कृतो दृश्यते (अवलोक्यतां ४. ४. २७ वृत्तिः) । सूत्रार्थबोधिनीकारेण

स्वकीयमतपरिपुष्ट्यर्थं तत्र तत्र गोभिलसूत्रकर्मप्रदीपद्राह्यायणश्रौत-सूत्रगृह्यासङ्ग्रहादिग्रन्थेभ्यो वाक्यान्युद्धृतानि दृश्यन्ते । सूत्राणां भाषानुवादेन सूत्रार्थस्य न तावदाकलनं भवति यावद्वृत्त्यादिभिः । एवं सत्यपि मन्ये सूत्रार्थबोधिन्याः प्रकाशनेन ओल्डेन्बर्ग्महोदय-कृतस्य आङ्ग्लभाषानुवादस्य अंशतोऽपि पुनस्संपादनमावश्यकं भवेत् ।

एवं खादिरगृह्यसूत्राणां नवीनामप्यनवद्यां वृत्तिमुपर-चितवद्भिः श्रीमद्भिः पट्टाभिरामार्यैः न केवलं ऋषीणामानृण्यं संपादितम्; अपि तु करालेऽस्मिन् कलिकाले तनिमानमापन्नाना-माचारविशेषाणां परिरक्षणं भारते जनिष्यमाणानां जिज्ञासूनां कृते ग्रन्थरूपेण कृतमित्यतीव धन्यवादार्होऽस्ते ।

२

**श्रीयुतस्वामिशास्त्रिणः**

प्रयोगकुसुमावलीप्रणेतारः

त्रिशिरःपुरम् ।

इयं खलु सूत्रार्थबोधिन्याख्या खादिरसूत्रवृत्तिः आनन्दताण्डव-पुराभिजनेन ब्रह्मश्रीसम्पन्नेन पण्डितप्रकाण्डेन पट्टाभिरामार्येण संकलिता सञ्चकास्ति । समग्रा चेयमवलोकिता नितरां मुदमावहति ।

बहोः कालात् पूर्वमेव बीजतरुन्यायेन प्रमाणानि मनसि कृत्वा श्रीरुद्रस्कन्दाचार्येण विरचिता बहुभिरादृता सुप्रसिद्धा च काचन वृत्तिः दरीदृश्यते । उभावपि वृत्तिकारौ कचित्कचिदंशे विभिन्नाभिप्रायाविति स्पष्टं प्रतीयते । सा खल्वियं हि रीतिः विदुषां नैसर्गिकी ।

अयं तु वृत्तिकारः प्राक् पञ्चाशद्वर्षेभ्यः प्रायः अस्मद्दक्षिण-देशेऽनुपलब्धान् गोभिलगृह्यसूत्र—तद्व्याख्या-तदनुसारिकर्मप्रदीप—गृह्या-सङ्ग्रह –गृह्यकारिका—शौनकस्मृत्यादीन् बहून् ग्रन्थान् चिराय भूयसा

प्रयासेन महता च प्रयत्नेन संपाद्य सूक्ष्मदृष्ट्या विमृश्य तत्रत्यान् विषयान् ततस्ततो मधु रलनयेन सङ्गृह्य प्रतिविषयं प्रमाणवचनपुरस्सरमेव स्पष्टमुपपादयति। विना प्रमाणवचनं न पदमपि चलति। अपि चेयं वृत्तिः न केवलं खादिरगृह्यसूत्राणां, परं तु गोभिल गृह्यसूत्राणामपीति स्फुटं प्रतिभासेत प्रेक्षकाणामिति मन्ये।

संमुद्रितस्यास्य ग्रन्थस्यान्ते तत्र तत्र विप्रकीर्णानि कुसुमापचय-रीत्या संपाद्य अकाराद्यनुक्रमेण सन्निवेशितानि खादिरगृह्यसूत्राणि द्रष्टॄणां सहृदयानां सूत्रार्थजिज्ञासूनां अत्यन्तमुपकारकाणीति परमामोद-स्थानम्। एतदवलोकनेन मोमुदीतितमां मे स्वान्तम्।

इयं किल सूत्रार्थबोधिनी मधुरया ललितया हृदयंगमया च शैल्या सर्वान् सारज्ञान् समावर्जयतीति नितरां विश्वासिमि सुतरां तुष्यामि चेति सर्वं शिवम्।

इत्थं

स्वामिशास्त्री।

13-4-1955

३

**आङ्गै. श्रीयुतरङ्गस्वामिशास्त्रिणः**

श्रीराममन्दिरपाठशालाध्यापकाः

कुम्भघोणम्।

धर्मो जयति।

पट्टाभिरामविबुधेन्द्रविनिर्मितेयं
सूत्रार्थवृत्तिरतुलां मुदमातनोति।
यत्तत्र मानवचनानि परश्शतानि
तत्तद्विरोधशमनाय निरूपितानि ॥ १ ॥

नृणां कलौ धियमधर्मपथे निविष्टां
सन्मार्गगां कलयितुं ननु कल्पतेऽसौ।

सन्तस्तदत्र गुणदोषविमर्शनेन
सन्तोषमाप्नुयुरमन्दमधीतशास्त्राः ॥ २ ॥

आङ्गरै रङ्गनाथोऽयमन्नवाणिवशंवदः ।
अद्वैतं सामरस्यं च पश्यन् बह्वभिनन्दति ॥ ३ ॥

**अ. रा. रङ्गस्वामिशास्त्री**
*7-5-55*

४

**श्रीयुतपञ्चापगेशशास्त्रिणः**

अण्णामलैविश्वविद्यालयाध्यापकाः

अण्णामलैनगरम् ( चिदम्बरम् )

आनन्दताण्डवपुरनिवासिभिः श्रीमद्भिः पट्टाभिरामार्यैः विरचिता सूत्रार्थबोधिनीनामिकेयं खादिरसूत्रवृत्तिः मया अवलोकिता । वृत्तिकारा एते सूत्रेभ्यस्स्वरसतो लभ्यमर्थं अनतिविस्तरसङ्क्षेपं ललितैः पदैस्सुविशदं प्रकाशयन्ति । अनुक्तमपेक्षितमविरुद्धमर्थजातं ज्ञातिकर्म ( पृ. 14 ) अग्निसन्धान ( 56 ) नान्दीश्राद्ध ( 57 ) अन्नप्राशनादि ( 73 ) तत्र तत्र सङ्गृह्णन्ति । स्वोक्तार्थे प्रमाणतया प्रायशः खादिरगृह्यस्य विस्तररूपात् गोभिलगृह्यात्, गृह्यासङ्ग्रहकर्मप्रदीपादिग्रन्थेभ्यश्च वचनान्युदाहरन्ति । किञ्च अस्पष्टार्थानां बहूनां पदानां क्षार ( पृ. 28 ) अयुगू ( 103 ) विलयन ( 106 ) चातुर्मासी ( 116 ) आचितादीनां ( 152 ) वैशेषिकानर्थान् सविमर्शं सप्रमाणं प्रतिपादयन्ति । वृत्तिश्चेयं बहुषु स्थलेषु रुद्रस्कन्दाचार्यप्रणीतया वृत्त्या विसंवदति । विसंवादस्थलेषु औपासनहोमारम्भ ( 32 ) पुत्रसंस्कारार्थाग्निनिर्णय ( 71 ) अष्टर्चहोम ( 130 ) अन्वष्टक्यादिषु ( 134 ) प्रमाणप्रदर्शनपूर्वकं एते वृत्तिकाराः स्वाभिप्रायं समर्थयन्ति ।

सप्रमाणं सविमर्शं च विषयान् प्रतिपादयन्तीयं वृत्तिः सूत्रार्थावगमे तदनुष्ठाने च भृशमुपकुर्यादिति विश्वसिमि । वृत्तिद्वयं सम्यक् परिशील्य साधीयःपक्षनिर्णये प्रयतेरन्निति पण्डितान् प्रार्थये ।

पि. पञ्चापगेशशास्त्री
*28–4–55*

५

श्रीयुतशिवरामकृष्णशास्त्रिणः
अण्णामलैविश्वविद्यालयाध्यापकाः
अण्णामलैनगरम् ।

श्रीरामश्शरणम् ।

महदिदं श्लाघायाः प्रमोदस्य च स्थानं यत् प्रसुप्तधर्मानुष्ठान-श्रद्धे प्रलुप्तधर्मशास्त्रविचारे परिशुष्कगीर्वाणग्रन्थमालादरे कालेऽस्मिन् काले आनन्दताण्डवपुरवास्तव्याः ब्रह्मश्रीयुतपट्टाभिरामार्याः गीर्वाणगीर्षु तत्रापि धर्मशास्त्रेषु नूतनायां कृतौ प्रायतिषतेति ।

इमे हि प्रदेशेऽस्मिन् गृह्यकर्मणामिदानीन्तनीं स्खलन्तीं गतिं बहोः कालादारभ्य विचिन्तयन्तः छन्दोगानां गृह्यकर्मप्रमाणभूतानि खादिरगृह्यसूत्राणि बहुग्रन्थसंवादपूर्वकं बहुकृत्वः परिशील्य अधुनातनीं छन्दोगगृह्यानुष्ठानसरणिं परिष्कर्तुकामाः शास्त्रज्ञ-साधारण-जनसुलभावगाह्यां सरलसरलां सङ्गतार्थनाम्नीं सूत्रार्थबोधिनीं खादिर-सूत्रवृत्तिं विरचय्य गृह्याण्यनुतिष्ठासतामनुष्ठापयतां च उपकारमेवैकं, नान्यत्किमपि प्रयोजनं मन्यमानाः स्वीयं परिश्रमं द्रविणव्ययमप्य-विगणय्य सुष्ठु मुद्राप्य धार्मिकाणां विदुषां च सविधे वितरन्ति । 'सर्वारम्भा हि दोषेण' इतीमां गीतोक्तिमनुरुद्ध्य अत्रापि विप्रति-पन्नमतयो न न संभाव्यन्ते । अथापि 'न हि मृगास्सन्तीति यवा

नोप्यन्ते, न वा अतिथयस्सन्तीति स्थाल्यो नाधिश्रीयन्ते' इति महाभाष्यकृतां वचनमवलम्ब्य साधुकर्मणि प्रवृत्ता इमे भारतीयान् धार्मिकजनानधमर्णीचक्रुः इत्यत्र न कोऽपि विशयीत। सर्वथा भगवान् जानकीजानिः तेषामिदं प्रयतनं फलेन युङ्क्तामिति दृढा मे आशा।

इत्थं

**क. अ. शिवरामकृष्णशास्त्री,**

मान्मथवैशाखशुक्लचतुर्दशी

*5–5–55*

६

Shree. Dr. Suryakanta,

**Sanskrit Professor,**

**Banaras Hindu University,**

**BANARAS.**

*Dear Sir,*

Thank you so much for your Khādira Grhya, which is indeed a work of sound scholarship. I am grateful to you for the gift.

With thanks,

*Yours Sincerely,*

**Suryakanta.**

15–4–55

७

Prof. Louis Renou,

(of Paris)

**Maison Franco Japonaize,**

**TOKYO, JAPAN,**

*Dear Dr. Pattabhiramarya,*

I thank you very much for having sent to me the new edition of the Khādira-Grhya you have

procured, taking the trouble of writing a fresh commentary to it.

I see that your commentary, in spite of its (welcome) concision, is always very clear and considerably helps to the understanding of the Sūtra. You have demonstrated that a lucid commentary, composed nowadays, can be of much better use than ancient commentaries, like that one by Rudraskanda. I congratulate you for your achievement..

With best greetings,

*I am sincerely yours,*

**L. Renou.**

12. April.

# ॥ विषयानुक्रमणिका ॥

सूत्राङ्कः

## पटलः १. खण्डः १.


| | | |
|---|---|---|
| सूत्रकृत्प्रतिज्ञा | ... | १ |
| अनादेशे कालः | ... | २ |
| कर्मणोऽन्ते ब्राह्मणभोजनम् | ... | ३ |
| यज्ञोपवीतम् | ... | ४– ६ |
| आचमनप्रकारः | ... | ७– १० |
| कर्मस्ववस्थानप्रकारः | ... | ११, १२ |
| स्नानशब्दे स्नानप्रकारः | ... | १३ |
| अनादेशे कर्तुरङ्गम् | ... | १४ |
| मन्त्रान्तलक्षणम् | ... | १५ |
| होमेषु मन्त्राणां स्वाहान्तता | ... | १६ |
| पाकयज्ञस्वरूपम् | ... | १७– १९ |
| ब्रह्मणा कर्तव्यम् | ... | २०– २३ |
| ब्रह्मोपवेशनप्रकारः (वृत्तिः) | ... | २० |
| ब्रह्मणोऽनुकल्पः | ... | २४ |
| यजमानस्य नियमः | ... | २५ |


## प. १. ख. २.


| | | |
|---|---|---|
| उपलेपनम् | ... | २६ |
| लक्षणम् | ... | २७– २९ |
| अग्न्युपसमाधानम् | ... | ३० |
| परिसमूहनम् | ... | ३१ |
| भूमिजपः | ... | ३२, ३३ |
| स्तरणम् | ... | ३४– ३६ |
| आज्यसंस्कारः | ... | ३७– ४१ |
| प्रसेकः | ... | ४२, ४३ |

पर्युक्षणम् ... ४४
इध्माधानम् ... ४५
प्रपदवैरूपाक्षजपः ... ४६, ४७
उक्तानां होमेषु कार्यत्वम् ... ४८

प. १. ख. ३.

पाणिग्रहणप्रकरणम् ... ४९– ७६

प. १. ख. ४.

उद्वाहः ... ७७, ७८
पूर्णाहुतिः (लेखाहोमः) ... ७९– ८२
मधुपर्कः ... ८३, ८४
दम्पत्योर्नियमः ... ८५
हविष्यान्नप्राशनम् ... ८६– ८७
रथारोहणादीनि (वृत्तिः) ...
चतुर्थीहोमः ... ८८– ९०
गर्भाधानम् ... ९१, ९२

प. १. ख. ५.

गृह्याग्निस्वरूपम् ... ९३, ९४
अग्निसंपादनप्रकारः ... ९५– ९७
गृह्याग्निपरिचरणम् ... ९८-१११
वैश्वदेवप्रकरणम् ... ११२-१३२
एकत्र सर्वबलिहरणप्रकारः (वृत्तिः) ... १२७

प. २. ख. १.

दर्शपूर्णमासप्रकरणम् ... १३३-१६२

प. २. ख. २.

दर्शपूर्णमासदेवताविचारः ... १६३-१६६
नित्यहोमादीनां गौणकालः ... १६७-१७०
होमाकरणे अभोजनेन व्रतसन्तानं ... १७१
गौणद्रव्यम् ... १७२-१७६

अग्निसन्धानप्रकार: (वृत्ति:) ... १७६
अनादेशे द्रव्यम् ... १७७
अनादेशे मन्त्र: ... १७८
नान्दीश्राद्धम् (वृत्ति:)
पुंसवनम् ... १७९-१८६
सीमन्तोन्नयनम् ... १८७-१९०
गर्भाधानादिसंस्कारविषये विचार: (वृत्ति:) ... १९०
सोष्यन्तीहोम: ... १९१-१९४
जातकर्म ... १९५-१९७

प. २. ख. ३.

बहिर्निष्क्रमणम् ... १९८-२०२
नामकरणम् ... २०३-२०९
विप्रोषितागतकर्म ... २१०-२१२
अन्नप्राशनम् (वृत्ति:) ...
चौलम् ... २१३-२३०

प. २. ख. ४.

उपनयनप्रकरणम् ... २३१-२५४
समिदाधानम् ... २५५
भैक्षचरणम् ... २५६-२५९
ब्रह्मचारिणो नियम: ... २६०, २६१

प. २. ख. ५.

सहप्रवचनीयव्रतान्ते कर्तव्यम् (वृत्ति:)
गोदानव्रतम् ... २६२-२७०
व्रतचारिणो नियमा: ... २७१-२७७
गोदानादिव्रतकाल: ... २७८
आदित्यव्रतम् ... २७९-२८२
शाक्करव्रतम् ... २८३-२९४
अनुप्रवचनीयव्रतान्ते कर्तव्यम् ... २९५

चित्यस्पर्शादिपापप्रायश्चित्तम् ... २९६-२९८

प. ३. ख. १.

आप्लवनम् ... २९९-३२९

स्नातकधर्माः ... ३३०-३४०

गोपुष्टिकर्माणि ... ३४१-३४९

प. ३. ख. २.

श्रावणम् (सर्पबलिकर्म) ... ३५०-३६२

उपाकरणम् ... ३६३-३६७

अनुपठनम् ... ३६८-३७०

उत्सर्गः ... ३७१

अनध्ययनम् ... ३७२-३७९

प. ३. ख ३.

आश्वयुजी ... ३८०-३८४

समानतन्त्रप्रकारः (वृत्तिः) ... ३८४

नवयज्ञः ... ३८५-३९४

आग्रहायणीकर्म ... ३९५-४०५

अष्टकाकालः ... ४०६

अष्टकासामान्ये कर्तव्यम् ... ४०७

प्रथमोत्तमयोरष्टकयोर्विशेषः ... ४०८-४११

प. ३. ख. ४.

मध्यमाष्टकायां विशेषः ... ४१२-४४१

तत्र व्यञ्जनार्थे पायसपक्षः (वृत्तिः) ... ४४१

प. ३. ख. ५.

अन्वष्टक्यम् ... ४४२-४७३

पिण्डपितृयज्ञः ... ४७४-४७८

ऋणहोमः (वृत्तिः) ... ४७८

इन्द्राणीस्थालीपाकः ... ४७९

प. ४. ख. १.

काम्यकर्माङ्गो भोजननियमः ४८०, ४८५

प्रपदप्रयोगः ब्रह्मवर्चसकामस्य ... ४८६, ४८७
स एव पशुकामस्य ... ४८८
पशुस्वस्त्ययनार्थं कर्म ... ४८९
सहकारावाप्तये फलदानप्रयोगः ... ४९०
पृथिवीलाभार्थं कर्म ... ४९१, ४९२
अर्थप्राप्तये ... ४९३
बृहत्पलक्षेमार्थम् ... ४९४
क्षुद्रपशुक्षेमार्थम् ... ४९५
गुर्वर्थप्राप्त्यर्थम् ... ४९६
प्रवासात्सुखं गृहागमनाय ... ४९७
अन्नकाममारजपः ... ४९८
अलक्ष्मीनिर्णोदहोमः ... ४९९, ५००
पथि भयनिवृत्तये जपः ... ५०१
आदित्योपस्थानं यशःप्राप्तये ... ५०२, ५०३
तदेव क्षेमार्थम् ... ५०४, ५०५

**प. ४ ख. २.**

आचितशतलाभार्थं कर्म ... ५०६, ५१०
शुभवास्तुलक्षणादि ... ५११, ५२३
वास्तुकर्म ... ५२४, ५३२
वशीकरणप्रयोगः ... ५३३

**प. ४. ख. ३.**

शङ्कुशतहोमः शत्रुवधकामस्य ... ५३४, ५३५
स एव आयुष्कामस्य ... ५३६
ग्रामलाभार्थं कर्म ... ५३७–५४०
वृत्त्यविच्छेदार्थम् ... ५४१
पण्यसंपदर्थम् ... ५४२
यशःप्राप्तये पूर्णहोमः ... ५४३
सहायसंपत्तये कर्म ... ५४४

| | |
|---|---|
| आधिपत्यावाप्तये | ... ५४५-५४७ |
| गवामुपतापस्य शान्तये | ... ५४८ |
| पथि भयनिवृत्तये ग्रन्थिकरणम् | ... ५४९ |
| आचितसहस्रावाप्तये कर्म | ... ५५० |
| पशुक्षुद्रपशुसमृद्धये | ... ५५१ |
| वृत्त्यविच्छेदाय | ... ५५२ |

प. ४. ख ४.

| | |
|---|---|
| विषशमनप्रयोग: | ... ५५३ |
| स्नातकस्य क्षेमार्थं दण्डनिधानम् | ... ५५४,५५५ |
| कृमिनाशार्थ: प्रयोगः | ... ५५६ |
| स एव पशुविषये | ... ५५७ |
| मधुपर्कप्रकरणम् | ... ५५८-५७९ |

---

## ॥ अशुद्धशोधनम् ॥

| पार्श्वे | पङ्क्तौ | मुद्रितम् | पठनीयम् |
|---|---|---|---|
| ११ | ११ | इध्मान् | इध्मम् |
| ११ | ११ | खादिरान् | खादिरान् |
| १२ | ८ | (५४४) | (५४८) |
| १६ | १२ | इत्यादि। | इति। |
| १७ | १३ | प्रपद - | वैरूपाक्ष- |
| १८ | ४ | प्रपद - | वैरूपाक्ष - |
| १८ | ७ | प्रपद- | वैरूपाक्ष- |
| १९ | ७ | नामकरणादीनि | पूर्णाहुत्यादीनि (७९) |
| १९ | १४ | प्रपदान्त- | वैरूपाक्षजपान्त- |
| २१ | १० | अश्मानं। | अश्मानं |
| ४० | २ | (५२६, ५२७) | (५३०, ५३१) |
| ५३ | १ | आग्नेयस्थालीपाकः | आग्नेयस्स्थालीपाकः |
| ५५ | १८ | यवति | भवति |
| ६३ | २१ | समाविश्य इति पाठान्तरं | नास्ति। |
| ९० | ५ | अहतवासो विषये | अहतवासोविषये |
| ९१ | १२ | मैधुन- | मैथुन- |
| ९६ | ५ | तान्यह | तान्याह |
| १०४ | १६ | उदपानोवक्षण- | उदपानावेक्षण- |
| १३३ | १० | व्यञ्जनार्थस्थाली- पाकपक्षेऽपि | व्यञ्जनार्थमपि स्थालीपाके |
| १३५ | ११ | उदायुवं | उदायुवन् |
| १४१ | २० | निर्वपेत् | निवपेत |
| १५१ | ६ | अहर्नोऽति | अहर्नो अति- |

॥ श्रीः ॥

॥ श्रीलक्ष्मीनृसिंहाय नमः ॥

# ॥ खादिरगृह्यसूत्रम् ॥

## सूत्रार्थबोधिनीसहितम् ।

—*—

१. अथातो गृह्या कर्माणि ॥ १ ॥

श्रीरामचन्द्रपादाब्जमकरन्दाप्लुतान्तरः ।
कुर्वे खादिरसूत्राणां वृत्तिं सूत्रार्थबोधिनीम् ॥

अथेत्ययं शब्दः आनन्तर्यं बोधयन् श्रुत्या माङ्गलिकश्च भवति । प्रतियोगी चानन्तर्ये योग्यताबलात् सोपनिषत्कप्रकृत-सामशाखाध्ययनरूपः । अतश्शब्दो हेत्वर्थः । अध्ययनस्य अधिकारिविशेषणविद्यारूपतया कर्मानुष्ठानेनैव सार्थक्याद्धेतोरिति भावः । गृह्या गृह्याणि । 'शेश्छन्दसि बहुलं' (पा. सू. ६. १.७०) इति शेर्लोपः । गृहे साधूनि गृहस्थाश्रमहितानीत्यर्थः । 'तत्र साधुः' (पा. सू. ४. ४. ९८) इति यत् । यद्यपि ब्रह्मचारिणो धर्मास्समिदाधानादयोऽपि केचन प्रस्तोष्यन्ते अथापि भूम्ना गृह्यत्वव्यवहारः ।

यद्वा, गृह्यन्ते इति गृह्याणि । यानि विवाहादीनि कर्माणि अधिगतवेदार्थानां महर्षीणामाचाराद् गृह्यन्ते तानि गृह्याणि । तथा चापस्तम्बः— 'अथ कर्माण्याचाराद्यानि गृह्यन्ते' (आप-गृ. सू. १-१) इति । एतेषां शिष्टाचारविषयत्वं स्मृतिवचनेभ्यो निश्चीयते ।

तथा च समग्रवेदाध्ययनानन्तरं तस्य कर्मानुष्ठानेनैव सफलत्वाद्धेतोः अनुष्ठेयानि गृह्याणि कर्माणि उपदेक्ष्यामः इति वाक्यार्थः संपद्यते । 'अथातो गृह्या कर्माण्युपदेक्ष्यामः' (१-१-१) इति गोभिलः ॥ १ ॥

२. उदगयनपूर्वपक्षपुण्याहेषु प्रागावर्तनादह्नः कालोऽनादेशे ॥ २ ॥

काले अनिर्दिष्टे सति एष कालः—उदगयनं मकरादि-मासषट्कं, पूर्वपक्षः शुक्लपक्षः, पुण्याहं ज्योतिश्शास्त्रविहितं प्रशस्तनक्षत्रादियुक्तं दिनं, अह्नः आवर्तनात् प्राक् पूर्वाह्ण इत्यर्थः । एतेषां यथासंभवं समुच्चयः । समुच्चितोपलब्धौ फल-भूमा । काले निर्दिष्टे तु स एव यथा श्रावणादेः (३५०) ॥२॥

कर्मणामङ्गान्याह—

३. अपवर्गे यथोत्साहं ब्राह्मणानाशयेत् ॥ ३ ॥

कर्मणोऽन्ते यथाशक्ति ब्राह्मणानधीतवेदांस्त्र्यवरान् भोजयेत । गोभिलश्च 'अपवर्गेऽभिरूपभोजनं यथाशक्ति' (१-१-६) इति ॥

४. यज्ञोपवीतं सौत्रं कौशं वा ॥ ४ ॥

धारयेदिति शेषः । सौत्रयज्ञोपवीताभावे कौशम् ॥ ४ ॥

५. ग्रीवायां प्रतिमुच्य दक्षिणं बाहुमुद्धृत्य यज्ञो-पवीती भवति ॥ ५ ॥

यज्ञोपवीतमित्यनुवर्तते । एवं धारणं विशिष्यानादेशे सार्वदिकम् ॥ ५ ॥

६. सव्यं प्राचीनावीती ॥ ६ ॥

सव्यं बाहुमुद्धृत्य प्राचीनावीती भवति। एवं धारणं पित्र्ये कर्मणि। 'पितृयज्ञे त्वेव प्राचीनावीती भवति' (१-२-४) इति गोभिलः ॥ ६ ॥

७. त्रिराचम्यापो द्विः परिमृजीत ॥ ७ ॥

त्रिः अपो वीक्षिताः ब्रह्मतीर्थेन पीत्वा द्विवारं परिमृजीत। वीक्षणं शुद्धिज्ञानायातिशयाधानाय च।

"प्रक्षाल्य पादौ हस्तौ च त्रिः पिबेदम्बु वीक्षितम्।
संवृत्याङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततो मुखम्॥"

इति दक्षः। मुखं ओष्ठौ अलोमप्रदेशाद्बहिः ॥ ७ ॥

८. पादावभ्युक्ष्य शिरोऽभ्युक्षेत् ॥ ८ ॥

अद्भिः, सामर्थ्यात्। विसमासकरणं पादाभ्युक्षणशेषेण शिरसोऽभ्युक्षणस्य निषेधार्थम् ॥ ८ ॥

९. इन्द्रियाण्यद्भिस्संस्पृशेत् ॥ ९ ॥

शीर्षण्यानि इन्द्रियायतनानि अद्भिः संस्पृशेत; 'अक्षिणी नासिके कर्णाविति' (१-२-८) इति गोभिलवचनात् 'खानि चोपस्पृशेच्छीर्षण्यानि' (१-४१) इति गौतमवचनाच्च।

संस्पर्शप्रकारश्च उशनसा अभिहितः—'अङ्गुष्ठोपकनिष्ठिकाभ्यां नयने चन्द्रादित्यौ ध्यात्वा तत उपस्पृश्य तर्जन्यङ्गुष्ठाभ्यां नासिकावकाशौ प्राणान् ध्यात्वा तत उपस्पृश्य

अङ्गुष्ठकनिष्ठिकाभ्यां कर्णौ दिशो ध्यात्वा तत उपस्पृश्य अङ्गुष्ठेन केवलेन हृदयमुपस्पृशेदात्मानं ध्यायन्' इति ॥ ९ ॥

१०. अन्ततः प्रत्युपस्पृश्य शुचिर्भवति ॥ १० ॥

इन्द्रियाणां संस्पर्शनानन्तरं पाणी प्रक्षाल्य शुचिर्भवति। प्रत्युपस्पृश्येत्यनेन आदौ कार्यमुपस्पर्शनं सूचितम्। आचमनं चेदं प्राङ्मुखेनोदङ्मुखेन वा कार्यम् ॥ १० ॥

कर्मस्ववस्थानप्रकारमाह—

११. आसनस्थानसंवेशनान्युदगग्रेषु दर्भेषु प्राङ्मुखस्य प्रतीयात् ॥ ११ ॥

आसनं उपवेशः, स्थानं उत्थितावस्थानं, संवेशनं शयनं एतानि प्राङ्मुखस्योदगग्रेषु दर्भेषु प्रतीयात जानीयात ॥ ११ ॥

सहोमकेषु कर्मसु

१२. पश्चादग्नेर्यत्र होमस्स्यात् ॥ १२ ॥

यत्र यस्मिन्नग्नौ होमस्स्यात् तस्मादग्नेः पश्चात कर्तुरासनादीनि प्रतीयात ॥ १२ ॥

१३ सहशिरसं स्नानशब्दे ॥ १३ ॥

यत्र यत्र स्नानशब्दश्श्रूयते तत्र तत्र सशिरस्कं स्नानं—न तु गौणम्—प्रतीयादिति वर्तते ॥ १३ ॥

१४. दक्षिणेन पाणिना कृत्यमनादेशे ॥ १४ ॥

एतद्व्याख्यानरूपं कर्मप्रदीपवचनम् —

"यत्रोपदिश्यते कर्म कर्तुरङ्गं न तूच्यते ।
दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥" इति ॥

१५. मन्त्रान्तमव्यक्तं परस्यादिग्रहणेन विद्यात् ॥ १५ ॥

सूत्रेण प्रतीकमात्रग्रहणात्, यस्य मन्त्रस्य अन्तो व्यक्तं न ज्ञायते, तदुत्तरमन्त्रविनियोजकसूत्रेण परस्य उत्तरमन्त्रस्य आदिं ज्ञात्वा तत्पूर्वपदं पूर्वमन्त्रान्तं विजानीयात् । 'उत्तरादिः पूर्वान्तलक्षणम् (द्रा. श्रौ. सू. १-१-३) इति सूत्रकाराः । व्यक्तता तु मन्त्रान्तस्य छन्दसा स्वाहाकारेण वा ॥ १५ ॥

१६. स्वाहान्ता मन्त्रा होमेषु ॥ १६ ॥

स्वाहाकाररहिता मन्त्रा होमेषु स्वाहाकारान्ताः कर्तव्याः । स्वतः स्वाहान्तास्तु नास्य सूत्रस्य विषयः, अनर्थकत्वात् । 'नमोऽन्ते न नमः कुर्यात्स्वाहान्ते द्विठमेव च' इति तान्त्रिकाः । द्विठं स्वाहाकारम् । यत्र तु मन्त्रादौ स्वाहाकारः पठितः — 'स्वाहा सोमाय पितृमते' इत्यादौ — तत्रापि मन्त्रान्ते स्वाहाकारान्तरं न कर्तव्यम्, न्यायस्याविशेषात् । अत्र कर्मप्रदीपः —

"स्वाहाकुर्यान्न चात्रान्ते न चैव जुहुयाद्धविः ।
स्वाहाकारेण हुत्वाग्नौ पश्चान्मन्त्रं समापयेत् ॥" इति ॥

१७. पाकयज्ञ इत्याख्या यः कश्चैकाग्नौ ॥ १७ ॥

एकाग्नौ गृह्याग्नौ साध्यो यः कश्च यज्ञस्तस्य पाकयज्ञ इति संज्ञा । पाकशब्दः अल्पवाची । अल्पत्वं च श्रौतयज्ञापेक्षया ॥

**१८. तत्रर्त्विक् ब्रह्मा सायंप्रातर्होमवर्जम् ॥ १८ ॥**

तत्र पाकयज्ञे ब्रह्मा एक एव ऋत्विक् यजमानवृतो यज्ञनिर्वर्तकः । न पुनः श्रौते यज्ञे इव नाना ऋत्विजः । 'ब्रह्मैवैक ऋत्विक् पाकयज्ञेषु, स्वयं होता भवति' (१-९-८) इति गोभिलः ।

स ब्रह्मापि सायंप्रातर्होमे न भवति । सायंप्रातर्होमो व्रीहियवहोमादीनामपि (४८९) उपलक्षणम् अङ्गहोमरहितत्वस्य तुल्यत्वात् ॥ १८ ॥

ननु होत्रा त्वन्येन ऋत्विजा अवश्यं भाव्यमित्याशङ्कायामाह —

**१९. स्वयं हौत्रम् ॥ १९ ॥**

पाकयज्ञे यजमानस्स्वयं होता भवति न तु श्रौते यज्ञ इव अन्य एव कश्चन ऋत्विक् इत्यर्थः ॥ १९ ॥

ब्रह्मणः स्थानमाह —

**२०. दक्षिणतोऽग्नेरुदङ्मुखस्तूष्णीमास्ते ब्रह्माहोमात् प्रागग्रेषु ॥ २० ॥**

यजमानो भूमिजपान्तं (३२) कृत्वा 'ब्रह्माणं त्वां वृणे' इति ब्रह्माणं वृत्वा अग्रेणाग्निं गत्वा अग्नेर्दक्षिणतोऽग्निस्थानमारभ्य दक्षिणाग्रामविच्छिन्नामुदकधारां दत्त्वा प्रागग्रान् दर्भानास्तीर्य यथेतमागत्य पात्राण्यासादयति ॥

ततो ब्रह्मा यज्ञोपवीत्याचम्याग्रेणाग्निं गत्वा अग्नेर्दक्षिणत आस्तीर्णदर्भाणां पुरतः प्रत्यङ्मुखस्तिष्ठन् वामहस्तानामिकाङ्गुष्ठेन

आस्तीर्णदर्भाणामेकं गृहीत्वा 'निरस्तः परावसुः' इति मन्त्रेण निरस्येन्निर्ऋतिदेशे। तत उपस्पृश्य 'आवसोस्सदने सीदामि बृहस्पतिर्ब्रह्माहं मानुष ओम्' इति जपन् तेषु दर्भेषु उदङ्मुख उपविशेत। तथा उपविष्टः आकर्मपर्यवसानं तूष्णीमासीत।

अत्र विशेषे प्रमाणं गोभिलगृह्यं गृह्यासङ्ग्रहश्च ॥ २० ॥

२१. कामं त्वाधियज्ञं व्याहरेत् ॥ २१ ॥

यज्ञसंबन्धि भाषणं यावदपेक्षितं कुर्यात। यज्ञकर्मण्यन्यथा क्रियमाणे कर्तव्यं देववाण्या बोधयेत इत्यर्थः। लोकवार्तां न भाषेत ॥ २१ ॥

नियमलोपे निष्कृतिमाह —

२२. [1]अयज्ञियां वा व्याहृत्य महाव्याहृतीर्जपेत् ॥ २२ ॥

यज्ञसंबन्धरहितां संस्कृतेतरां वा वाचं व्याहरेच्चेत महाव्याहृतीर्जपेत। 'भूः' 'भुवः' 'स्वः' इत्येता महाव्याहृतयः। 'भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः' इति कर्मप्रदीपः॥

२३. [2]इदं विष्णुरिति वा ॥ २३ ॥

'इदं विष्णुः' इत्यादिं ऋचं वा जपेत। '...वैष्णवीमृचं यजुर्वा जपेत' (१-६-१९) इति गोभिलः। यजुः 'विष्णोः शिरोऽसि यशोधा यशो मयि धेहि' (ताण्ड्य. ब्रा.) इति ॥२३॥

ब्रह्मणोऽर्थे ब्राह्मणाभावे कर्तव्यमाह—

1. अयज्ञीयां—क। 2. इदं विष्णुरिति वा ऋचं – ख कव्वत्तिः।

**२४. हौत्रब्रह्मत्वे स्वयं कुर्वन् ब्रह्मासनमुपविश्य छत्रमुत्तरासङ्गं कमण्डलुं वा तत्र कृत्वाथान्यत् कुर्यात् ॥**

यजमानः स्वयमेव हौत्रं ब्रह्मत्वं च कुर्वाणः पूर्ववत् ब्रह्मस्थानं प्रकल्प्य स्वयमेव समन्त्रकं दर्भनिरसनं अपामुपस्पर्शनं च कृत्वा ब्रह्मस्थाने 'आवसोः' इत्यादिं मन्त्रं जपन्नुपविश्य छत्राद्यन्यतमं तत्र निधाय यथेतमागत्य स्वस्थाने उपविश्य भूमिजपानन्तरकार्यं कुर्यात् ॥ २४ ॥

**२५. अव्यावृत्तिं यज्ञाङ्गैरव्यवायं चेच्छेत् ॥ २५ ॥**

यजमानो यज्ञाङ्गानां पराङ्मुखो न भवेत् । व्यवधानं च नेच्छेत् । यथा तं तानि चान्तरा न कोऽपि गच्छेत् तथा भवेदित्यर्थः । इच्छेदिति प्रामादिके दोषाभावद्योतनार्थम् ॥

**इति प्रथमे पटले प्रथमः खण्डः ॥**



पूर्वस्मिन् खण्डे परिभाषोक्ता । अस्मिंस्तु सर्वेषु होमेषु प्रधानकर्मणः पूर्वं कर्तव्यान्याह —

**२६. पूर्वे भागे वेश्मनो गोमयेनोपलिप्य तस्य मध्यदेशे लक्षणं कुर्यात् ॥ १ ॥**

गृहमुखप्रदेशे गोमयेन चतुरश्रमुपलिप्य तस्य मध्यदेशे लक्षणं वक्ष्यमाणमभ्युक्षणान्तं कुर्यात ॥ १ ॥

**२७. दक्षिणतः प्राचीं रेखामुल्लिख्य ॥ २ ॥**

दक्षिणभागे प्रागग्रां रेखामुल्लिख्य । रेखोल्लेखनकरणविषये गृह्यासङ्ग्रहः —

"न नखेन न काष्ठेन नाश्मना मृन्मयेन वा ।
प्रोल्लिखेल्लक्षणं विप्रस्सिद्धिकामस्तु यो भवेत ॥" इति ।

"तस्मात् फलेन पुष्पेण पर्णेनाथ कुशेन वा ।
प्रोल्लिखेल्लक्षणं विप्रस्सिद्धिकामस्तु कर्मसु ॥" इति च ॥

**२८. तदारम्भादुदीचीं तदवसानात् प्राचीं तिस्रो मध्ये प्राचीः ॥ ३ ॥**

तदारम्भात प्राच्यारम्भात् । तदवसानात् उदीच्यवसानात् । मध्ये उपलिप्तस्थानस्य । प्राच्यश्च उदीचीसंलग्ना उदगपवर्गा उल्लेख्याः । रेखाप्रमाणमाह कात्यायनः —

"लक्षणे प्रागतायास्तु प्रमाणं द्वादशाङ्गुलम् ।
तन्मूलसक्ता योदीची तस्या एतन्नवोत्तरम् ।
उदग्गतायास्संलग्नाश्शेषाः प्रादेशमात्रिकाः ॥" इति ॥

**२९. तदभ्युक्ष्य ॥ ४ ॥**

तत् रेखाङ्कितं स्थलं अभ्युक्ष्य न्यञ्चता पाणिना अद्भिस्सिक्त्वा

"उत्तानेनैव हस्तेन प्रोक्षणं समुदाहृतम् ।
न्यञ्चताभ्युक्षणं प्रोक्तं तिरश्चावोक्षणं स्मृतम् ॥"

इति वचनात् ।

एतत् (२७, २८, २९) लक्षणमुच्यते ॥ ४ ॥

**३०. अग्निमुपसमाधाय ॥ ५ ॥**

लक्षणे आभिमुख्येन निधाय । अत्र गोभिलः 'भूर्भुवस्स्वरित्यभिमुखमग्निं प्रणयन्ति' (१-१-११) इति । अत्र गृह्यासङ्ग्रहः—

"शुभं पात्रं तु कांस्यं स्यात्तेनाग्निं प्रणयेद्बुधः ।
तस्याभावे शरावेण नवेनाभिमुखं च तम् ॥" इति ॥

**३१. इमं स्तोममिति परिसमूह्य तृचेन ॥ ६ ॥**

विकीर्णानग्निकणान् 'इमं स्तोमं' 'भराम' 'शकेम' इत्यारम्भाभिस्तिसृभिः ऋग्भिः परिसमूहेत । प्रत्यृचं प्रागुपक्रममुदगपवर्गं परिसमूहनम् ॥ ६ ॥

**३२. पश्चादग्नेर्न्यञ्चौ पाणी कृत्वेदं भूमेरिति ॥ ७ ॥**

जपेदिति शेषः । मन्त्रे पादत्रयादूर्ध्वं 'अन्येषां विन्दते धनम्' इति पादं संयोज्य दिवा जपेत् । रात्रौ 'अन्येषां विन्दते वसु' इति पादम् (३३) । एवमनयोर्विनिवेशः । न्यञ्चनप्रकारश्च

कर्मप्रदीपे—

" दक्षिणं वामतो बाह्यमात्माभिमुखमेव च ।

करं करस्य कुर्वीत करणे न्यञ्चकर्मणः ॥" इति ॥ ७ ॥

**३३. वस्त्रान्तं रात्रौ ॥ ८ ॥**

स्पष्टम् । इदानीं ब्रह्मोपवेशनं कर्तव्यम् ॥ ८ ॥

अथ परिस्तरणम् । तत्त्रिविधम् । तत्र प्रथममाह—

**३४. पश्चाद्दर्भानास्तीर्य दक्षिणतः प्राचीं प्रकर्षे-दुत्तरतश्च ॥ ९ ॥**

अग्नेरिति शेषः । दर्भान् प्रागग्रानुदगपवर्गमास्तीर्य । एवं पिण्डपितृयज्ञे ॥ ९ ॥

द्वितीयमाह—

**३५. अप्रकृष्य वा ॥ १० ॥**

पश्चाद्दर्भास्तरणमेव, न प्रकर्षणम् । एवमन्वष्टक्ये ॥ १० ॥

तृतीयमाह—

**३६. पूर्वोपक्रमं प्रदक्षिणमग्निं स्तृणुयान्मूलान्यग्रै-श्छादयंस्त्रिवृतं पञ्चवृतं वा ॥ ११ ॥**

अग्नेः पुरस्ताद्दक्षिणत उत्तरतः पश्चाच्च कुशान् प्रागग्रान् स्तृणुयात् । अयं स्तरणपक्षस्सामान्यतस्सर्वकर्मसु ॥ ११ ॥

**३७. उपविश्य दर्भाग्रे प्रादेशमात्रे प्रच्छिनत्ति न नखेन पवित्रे स्थो वैष्णव्याविति ॥ १२ ॥**

दर्भेषूपविश्य। 'ओषधिमन्तर्धाय छिनत्ति...' (१-७-२०) इति गोभिलः ॥ १२ ॥

३८. अद्भिरुन्मृज्य विष्णोर्मनसा पूते स्थ इति ॥ १३ ॥

उन्मृज्य वामहस्तेन मूलं गृहीत्वा दक्षिणेनोन्मृज्य ॥

३९. उदगग्रे अङ्गुष्ठाभ्यामनामिकाभ्यां च सङ्गृह्य त्रिराज्य[1]मुत्पुनाति देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोस्सूर्यस्य रश्मिभिरिति ॥ १४ ॥

उत्पुनाति प्राचीमूर्ध्वं क्षिपति। मन्त्रस्य त्रिरावृत्तिः ॥

४०. अभ्युक्ष्यैते अग्नावनुप्रहरेत् ॥ १५ ॥

अद्भिरभ्युक्ष्य ॥ १५ ॥

४१. आज्यमधिश्रित्योत्तरतः कुर्यात् ॥ १६ ॥

आज्यपात्रमग्नौ निधाय तस्योत्तरतो निदध्यात्। '...आज्यमधिश्रित्योदगुद्वासयेत्' (१-७-२५) इति गोभिलः ॥

४२. दक्षिणजान्वक्तो दक्षिणेनाग्निमदितेऽनुमन्यस्वेत्युदकाञ्जलिं प्रसिञ्चेत् ॥ १७ ॥

दक्षिणेन जानुना भूमिं गतस्सन्नग्नेर्दक्षिणतोऽञ्जलिना प्रागग्रमुदकं प्रसिञ्चेत् ॥ १७ ॥

४३. अनुमतेऽनुमन्यस्वेति पश्चात् [2]सरस्वत्यनुमन्यस्वेत्युत्तरतः ॥ १८ ॥

---

1. मुत्पुनातु ङ 2. सरस्वतेऽनुमन्यस्व ग ङ च।

अत्र होमाङ्गानां बहिर्भावः ॥ १८ ॥

**४४. देवसवितः प्रसुवेति प्रदक्षिणमग्निं पर्युक्षेदभिपरिहरन् हव्यं सकृत्त्रिर्वा ॥ १९ ॥**

होमीयद्रव्यमन्तर्भावयन्नग्निं प्रदक्षिणमुदकेनैकवारं त्रिवारं वा यथाचारं पर्युक्षेदुक्तमन्त्रेण। त्रिवारपक्षे मन्त्रस्य त्रिरावृत्तिः। अत्र गोभिलः—'देव सवितः प्रसुवेति प्रदक्षिणमग्निं पर्युक्षेत्सकृद्वा त्रिर्वा' (१-३-४) इति। अत्र विशेषमाह स एव 'पर्युक्षणान्तान् व्यतिहरन्...' (१-३-५) इति। व्यतिहरन् आरम्भकोटिमन्तरतोऽवसानकोटिं बाह्यतश्च कुर्वन् ॥ १९ ॥

**४५. [1]समिध आधाय ॥ २० ॥**

समिध इध्मान्। '...खादिरान् वा पालाशान्वा' (१-५-१५) इति गोभिलः। तासां लक्षणं च कर्मप्रदीपे—

"प्रादेशद्वयमिध्मस्य प्रमाणं परिकीर्तितम्।
एवंविधास्स्युरेवेह समिधस्सर्वकर्मसु ॥
समिधोऽष्टादशेध्मस्य प्रवदन्ति मनीषिणः।
दर्शे च पौर्णमासे च क्रियास्वन्यासु विंशतिम् ॥"

इति। ता अग्नावाधाय ॥ २० ॥

**४६. प्रपदं जपित्वोपताम्य कल्याणं ध्यायन् वैरूपाक्षमारभ्योच्छ्वसेत् ॥ २१ ॥**

'तपश्च' इत्यारभ्य 'आत्मानं प्रपद्ये' इत्यन्तः प्रपदनामा मन्त्रः। 'विरूपाक्षः' इत्यारभ्य 'ब्रह्मणः पुत्राय नमः'

1. समिधमाधाय ग च ज। समिधमादाय घ ङ छ।

इत्यन्तो वैरूपाक्षनामा मन्त्रः। प्रथमं प्रपदं जपित्वा एकाग्रचित्तो भूत्वा कल्याणमात्मनः क्षेमं चिन्तयन् वैरूपाक्षमारभ्य विरूपाक्षोऽसीत्युक्त्वोच्छ्वसेत्। तावत्पर्यन्तं निरुद्धप्राणो भवेत्। पश्चाद्वैरूपाक्षमन्त्रं समापयेत् ॥ २१ ॥

काम्येषु विशेषमाह—

**४७. प्रतिकामं काम्येषु ॥ २२ ॥**

काम्येषु काम्यकर्मसु प्रतिकामं प्रतिनियतं कामं 'मम गवामुपतापश्शाम्येत्' (५४४) इतिवत् ध्यायन्नित्यनुवर्त्यान्वयः ॥

**४८. सर्वत्रैतद्धोमेषु कुर्यात् ॥ २३ ॥**

सर्वेषु होमेषु एतद् उपलेपनादिवैरूपाक्षजपान्तं कुर्यात्। औपासनादिपरिचरणतन्त्रेषु पुनर्होमेषु नैतत्सर्वं भवति 'नात्र परिसमूहनादीनि पर्युक्षणवर्जम्' (१०९) इत्यपवादात्। पितृयज्ञे विशेषं पश्चात् (४४३) वक्ष्यामः। यानि तु लक्षणस्थेऽग्नौ तस्मिन्नेव देशे क्रियन्ते तेषूपसमाधानान्तस्य निवृत्तिः ॥ २३ ॥

इति प्रथमे पटले द्वितीयः खण्डः ॥



**४९. ब्रह्मचारी वेदमधीत्योपन्याहृत्य गुरवे दारान् कुर्वीत ॥ १ ॥**

ब्रह्मचारी प्रथमाश्रमी वेदमधीत्य, वेदमित्यावश्यकत्वाभिप्रायेण । तथा च मनुः —

"वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत् ॥"

इति । गुरवे आचार्याय उपन्याहृत्य समीपे विनीतं यथा भवति तथा दक्षिणां समर्प्य तेनानुज्ञातो गृहावासाय दारान् कुर्वीत उद्वहेत् ॥ १ ॥

**५०. आप्लवनं च ॥ २ ॥**

समावर्तनं च कुर्वीतेत्यनुवर्तते ॥ २ ॥

**५१. तयोराप्लवनं पूर्वम् ॥ ३ ॥**

तयोः उक्तयोर्दारकरणाप्लवनयोः, आप्लवनं समावर्तनं पूर्वं कर्तव्यमिति शेषः ॥ ३ ॥

तर्हि किमिति पश्चात्कर्तव्यो विवाहः पूर्वं व्याख्यायते? अत्राह —

**५२. मन्त्राभिवादात्तु पाणिग्रहणस्य पूर्वं [1]व्याख्यातम् ॥**

मन्त्रपाठक्रमानुसारेण पाणिग्रहणस्य पूर्वं व्याख्यातं व्याख्यानमित्यर्थः ।

---

1. व्याख्यानम्-ख.

अत्र 'काम वेद ते' इत्यादिमन्त्रत्रयस्य विनियोग आचार्यैर्नोक्तः यत्कुसीदादिवत्। गोभिलाचार्यैस्तु ज्ञातिकर्मणि विनियोगस्सूत्रितः। स्वसूत्राविरोधादनुक्तमविरुद्धमन्यतो ग्राह्यमिति कृत्वा तानि सूत्राणि सव्याख्यानि लिख्यन्ते ॥

'क्लीतकैर्यवैर्माषैर्वाप्लुतां सुहृत्सुरोत्तमेन सशरीरां त्रि-र्मूर्धन्यभिषिञ्चेत् काम वेद ते नाम मदो नामासीति समानया-मुमिति पतिनाम गृह्णीयात् स्वाहाकारान्ताभिरुपस्थमुत्तराभ्यां प्लावयेत्। (गो. सू. २. १. १०) ॥

क्लीतकैश्चूर्णीकृत्य द्रवीकृतैराप्लुतां कृतसर्वाङ्गोद्वर्तनां सुहृत स्निग्धहृदयो वयस्यो मातृवर्गश्च, सुरा उदकं—वरुणं सुरारविन्दानीति निरुक्तं—तथा उत्तमोदकेन सशरीरां कन्यां मूर्धनि शिरसि त्रिः वारत्रयमभिषिञ्चेत्। अयमर्थः—मूर्धनि तथाभिषिञ्चेद्यथा सर्वमेव शरीरमभिषिक्तं भवतीति। तत्र करण-मन्त्रमाह—कामेति। एवमादिभिस्तिसृभिर्ऋग्भिस्स्वाहाकारान्ताभिः। एकैकामृचमुच्चार्यैकैकोऽभिषेकः कर्तव्यः। तत्रोत्तराभ्यामृग्भ्यां 'इमं त उपस्थम्' 'अग्निं क्रव्यादम्' इत्येताभ्यामुपस्थं योनिप्रदेशं प्लावयेत्। एतदुक्तं भवति—तिसृभिरप्याभिस्तथाभिषेकः कर्तव्यः यथा सर्वं शरीरमभिषिक्तं भवति। परं, उत्तराभ्यां तथा-भिषेक्तव्यं यथोपस्थप्रदेशो विशेषतः प्लावितो भवतीति।

अथेदानीं मन्त्रे विशेषमाह—समानयामुमिति। उक्तमन्त्र-षटकवाक्येऽमुमित्यस्य स्थाने पत्युर्वरस्य नाम गृह्णीयात्। तदिदं सूत्रमुत्सृज्य पाठक्रमं अनुसृत्यार्थक्रमं व्याख्यातम्।

अथ सुहृत्पदमभिव्यनक्ति—

ज्ञातिकर्मैनत। (गो. सू. २. १. ११.)॥

आसन्ने विवाहसमये कन्यादौर्भाग्यापनोदकशाखान्तरीयेणापि कर्तव्यः विरोधाभावादिति।' (मृदुलातः)

एवं च शुद्धाभिरद्भिः कुम्भत्रयस्थिताभिः कन्यामातृपितृकुलीनेन उक्तमन्त्रैस्सर्वाङ्गाभिषेकः कर्तव्य इत्यार्षवचनेनावगम्यते। एतद्विरोधेन दक्षिणदेशे छन्दोगानां प्रायशो मद्यप्रतिनिधिना पिष्टोदकेन श्वशुरेणोपस्थसेचनरूप आचारो वर्तते।

"सुराया गन्धमाघ्राय स्नात्वाज्यं प्राश्य शुद्ध्यति।
स्पर्शे प्रतिग्रहे चैव त्र्यहं पीत्वा तथोदकम्॥" (अङ्गिराः)

इति वचनात् सुराशब्दस्य मद्यपरत्वे निषिद्धकल्पनाप्रसक्तिः। अत्र कर्तव्यतानिर्णये शिष्टाः प्रमाणम्॥ ४॥

५३. ब्राह्मणस्सहोदकुम्भः प्रावृतो वाग्यतोऽग्रेणाग्निं गत्वोदङ्मुखस्तिष्ठेत्॥ ५॥

सहोदकुम्भः प्रशस्तजलपूरितकुम्भसहितः। तथा च गृह्यासङ्ग्रहेऽस्मिन् प्रकरणे—

"महानदीषु या आपः कौप्यान्याश्च ह्रदेषु च।
गन्धवर्णरसैर्युक्ता ध्रुवास्स्युरिति निश्चयः॥" इति।

प्रावृत आच्छादितशरीरः, वाग्यतो मौनी उदक्प्रदेशात् पूर्वेणाग्निं गत्वा अग्नेर्ब्राह्मणश्च दक्षिणत उदङ्मुखस्तिष्ठेत्। यदि मौनलोपस्तर्हि ब्रह्मण इव प्रायश्चित्तम्॥ ५॥

५४. स्नातामहतेनाच्छाद्य या अकृन्तन्निति ॥ ६ ॥

अविधवोपनीतमङ्गलोदकपूरितकुम्भचतुष्टयेन स्नाताम् । अत्र गृह्यासङ्ग्रहः—

" स्वर्णाभिरनिन्द्याभिरद्भिरक्षतमिश्रितैः ।
स्नानं चतुर्भिः कलशैः स्त्रीभिः स्त्रीं यत्र प्लावनम् ॥ " इति ।

इदं च स्नानं पूर्वोक्तसमन्त्रकस्नानभिन्नमेव । अहतेन वस्त्रेणेति शेषः । अहतवस्त्रलक्षणं च गृह्यासङ्ग्रहे—

" सकृद्धौतं नवं श्वेतं सदशं यन्न धारितं ।
अहतं तद्विजानीयात्सर्वकर्मसु पावनम् ॥ " इति ॥

श्वेतामित्युपलक्षणं नीलव्यतिरिक्तानां । आच्छाद्य वरः आच्छादनं कारयित्वेत्यर्थः । हेतुमण्ण्यन्तात्ल्यप् । तथा च गृह्यान्तरं 'अथैनं वासः परिधापयति' इत्यादि । वासःपरिधानसमये वरो 'या अकृन्तन्' इत्यादिं मन्त्रं जपेत । उत्तरीयपरिधानसमये 'परिधत्त' इत्यादिं मन्त्रम् ॥ ६ ॥

५५. आनीयमानायां पाणिग्राहो जपेत्सोमोऽददिति ॥७॥

कन्यापित्रा विवाहवेदिमानीयमानायां कन्यायां, तां वीक्ष्य वरो जपेत 'सोमोऽददत' इत्यादिं मन्त्रम् ।

अत ऊर्ध्वं मन्त्रद्वयविनियोगो नोक्त आचार्यैः । स च गोभिलाचार्यैस्सूत्रितः ।

(गो. सू) पश्चादग्नेस्संवेष्टितं कटमेवंजातीयं वान्यत्पदा प्रवर्तयन्तीं वाचयेत् 'प्र मे पति या नः पन्थाः कल्पताम्'

इति। स्वयं जपेदजपन्त्यां 'प्रास्या' इति ॥ २–१–१९.२०. ॥

अयमर्थः। प्रथमं मन्त्रं तां वाचयेत्। तस्यां बाल्येन लज्जया वा अजपन्त्यां द्वितीयं मन्त्रं स्वयं जपेत् ॥७॥

५६. पाणिग्राहस्य दक्षिणत उपवेशयेत् ॥ ८ ॥

कन्याप्रदाता। अयमत्रानुष्ठानक्रमः—

(१) कन्यायाः समन्त्रकं स्नापनं (२) स्त्रीभिस्तस्याः स्नापनं (३) कन्यादानं (४) सङ्कल्पः (५) माङ्गल्यधारणं (६) उपलेपनादिब्रह्मवरणान्तं (७) उदकुम्भधारणं (८) वस्त्रधारणं (९) सोमोऽददिति जपः। (१०) दक्षिणत उपवेशनं (११) परिस्तरणं (१२) आज्येध्मलाजदृषत्पुत्राणां सादनं (१३) पर्युक्षणेध्माधानाग्न्यर्चनप्रपदजपाः इति। पर्युक्षणे दृषत्पुत्रस्य बहिर्भावः अहव्यत्वात् ॥ ८ ॥

प्रपदजपानन्तरकर्तव्यमाह —

५७. अन्वारब्धायां स्रुवेणोपघातं महाव्याहृतिभिराज्यं जुहुयात् ॥ ९ ॥

पत्युर्दक्षिणमंसं दक्षिणेन पाणिना स्पृशन्त्यां वध्वां— 'दक्षिणेन पाणिना दक्षिणमंसमन्वारब्धायाः...' (२-१-२३) इति गोभिलवचनात् — स्रुवेण उपघातं — उपहत्योपहत्य अनुपस्तीर्यानभिघार्य प्रत्याहुति सकृत्सकृत् गृहीत्वा — जुहुयात्। तथा च गृह्यासंग्रहे—

"पाणिना मेक्षणेनाथ स्रुवेणैव तु यद्धविः ।
हूयते चानुपस्तीर्य उपघातस्स उच्यते ॥" इति ।

महाव्याहृतिभिः 'भूः' 'भुवः' 'स्वः' इति व्यस्ताभिः ।

अयं होमः प्रपदजपानन्तरमवत्तचरुहोमाभिन्नेषु साग्निकेषु कर्मसु कर्तव्योऽङ्गहोमः । केचनेमं मुख्यतया परिगणय्य एतद्भिन्नं व्याहृतिहोममङ्गत्वेन प्रतियन्ति । तदयुक्तम् । न हि सूत्रकारः प्रपदजपपर्यन्तं पूर्वाङ्गमुक्त्वा उपरिष्टाच्चाङ्गाहुतिं वदन् (६२) आज्यभागौ निषेधन् (६१) पूर्वाङ्गाहुतिमुपेक्षेत । अतोऽयमङ्गहोम एव । तथा गोभिलाचार्यैरप्यङ्गहोमप्रकरणे सूचितम्—
"आज्याहुतिष्वनादेशे पुरस्ताच्चोपरिष्टाच्च महाव्याहृतिभिर्होमः । यथा पाणिग्रहणे तथा चूडाकर्मण्युपनयने गोदाने च ॥" (गो. सू. १. ९. २३, २४) इति ॥

यत्र चतस्रो व्याहृतयो भवन्ति तत्रातिदेशेन प्रापयन्तीति भट्टनारायणः ॥ ९ ॥

पाणिग्रहणादिषु विशिष्टाङ्गाहुतिमाह—

**५८. समस्ताभिश्चतुर्थीम् ॥ १० ॥**

भूर्भुवस्स्वस्स्वाहेति ॥ १० ॥

**५९. एवं चौलोपनयनगोदानेषु ॥ ११ ॥**

उक्तेषु कर्मसु विशेषकर्मणः पूर्वं व्यस्ताहुत्यनन्तरं समस्ताभिर्व्याहृतिभिरङ्गहोमः ॥ ११ ॥

**६०. अग्निरेतु प्रथम इति षड्भिश्च पाणिग्रहणे ॥ १२ ॥**

पाणिग्रहणे पाणिग्रहणाख्येऽस्मिन् कर्मणि तु पाणिग्रहणात् पूर्वं 'अग्निरेतु' इत्यादिभिष्षड्भिश्चर्ग्भिराज्यं जुहुयात्। आसामप्यङ्गाहुतित्वद्योतनार्थश्चकारः ॥ १२ ॥

अङ्गान्तरप्रसक्तौ प्रतिषेधमाह—

**६१. नाज्यभागौ न स्विष्टकृदाज्याहुतिष्वनादेशे ॥ १३ ॥**

आज्याहुतिषु—यत्राज्यमेव द्रव्यं न चरुः यथा पाणिग्रहणाख्यमिदं कर्म, नामकरणादीनि च—तेषु, अनादेशे—यत्र विशिष्टो होम एव नादिश्यते यथा पुंसवनादीनि तेषु चाज्यभागौ न भवतः। स्रुवेण स्रुचि चतुर्गृहीतमाज्यं गृहीत्वा 'अग्नये स्वाहा' 'सोमाय स्वाहा' इति चरुतन्त्रे क्रियमाणौ होमावाज्यभागावित्युच्येते। न स्विष्टकृच्च होमान्ते। किन्तु पुरस्तादुपरिष्टाच्च व्याहृतिहोम एव। 'आज्यभागौ···' (१४८) 'स्विष्टकृतः···' (१५५) इति सूत्रयोरपवादोऽयम् ॥ १३ ॥

उत्तराङ्गहोमे तु प्रपदान्तवत्सु सर्वत्र साम्यमित्याह—

**६२. सर्वत्रोपरिष्टान्महाव्याहृतिभिः ॥ १४ ॥**

उपरिष्टात् सर्वत्र आज्यतन्त्रेषु चरुतन्त्रेषु च होमेषु अनादिष्टविशेषहोमेषु च कर्मसु व्यस्ताभिस्तिसृभिर्व्याहृतिभिर्जुहुयात् ॥

एवं च पाणिग्रहणे पूर्वत्र व्याहृतिहोमाश्चत्वारः अग्निरेतित्यादिषडाहुतयश्च, उपरिष्टाद् व्यस्ताहुतयस्तिस्रश्चोक्ताः ॥

६३. प्राजापत्यया च प्रायश्चित्तं जुहुयात् ॥ १५ ॥

प्राजापत्यया 'प्रजापते न त्वत्' इत्यारम्भया ऋचा प्रायश्चित्तं च जुहुयात् । कर्मप्रदीपे प्रायश्चित्तविधिः—

"यत्र व्याहृतिभिर्होमः प्रायश्चित्तात्मको भवेत् ।
चतस्रस्तत्र विज्ञेयाः स्त्रीपाणिग्रहणे यथा ॥

अपि वाज्ञातमित्येषा प्राजापत्यापि वाहुतिः ।
होतव्या त्रिविकल्पोऽयं प्रायश्चित्तविधिस्स्मृतः ॥" इति ।

अथवा चकारो महाव्याहृतीनामनुकर्षणार्थः । महाव्याहृतिभिः प्राजापत्यया च प्रायश्चित्तं जुहुयादित्यर्थः ॥ १५ ॥

अथ लाजहोमः—

६४. हुत्वोपोत्तिष्ठतः ॥ १६ ॥

हुत्वा अग्निरेत्वित्यादिषड्ढोमानन्तरं, उप संहृतहस्तौ उत्तिष्ठतः उत्तिष्ठतामित्यर्थः ॥ १६ ॥

६५. अनुपृष्ठं गत्वा दक्षिणतोऽवस्थाय वध्वञ्जलिं गृह्णीयात् ॥

वध्वाः पृष्ठदेशेन गत्वा दक्षिणतः उदङ्मुखो भूत्वा—'...उदङ्मुखोऽवतिष्ठते...' (२-२-२) इति गोभिलवचनात्—वरः स्वेनाञ्जलिना वध्वा अञ्जलिं गृह्णीयात् । दक्षिणेन पाणिनेत्येके । एतदञ्जलिग्रहणं पाणिग्रहणपर्यन्तं स्थास्यति । तथा च गृह्यान्तरं—

"हुत्वाऽग्यमथ जायाया अन्वारभ्याञ्जलिं पतिः।
न विमुञ्चेदनापस्तु यावत्पाणिग्रहो जपः॥" इति ॥१७॥

**६६. पूर्वा माता शमीपलाशमिश्रान् लाजान् शूर्पे कृत्वा पश्चादग्नेर्दृषत्पुत्रमाक्रामयेद्वधूं दक्षिणेन प्रपदेनेममश्मानमिति ॥ १८ ॥**

पूर्वा पूर्वस्यां दिशि स्थिता वध्वा माता वामहस्तेन यथोक्तान् लाजान् शूर्पेणादाय दक्षिणेन पाणिना अग्नेः पश्चात् वधूं दक्षिणेन प्रपदेन पादाग्रेण दृषत्पुत्रमाक्रामयेत्। तदानीं 'इममश्मानं' इत्यादिं मन्त्रं पाणिग्राहो जपेत्। अत्र गोभिलः 'पूर्वा माता लाजानादाय भ्राता वा वधूमाक्रामयेदश्मानं। दक्षिणेन प्रपदेन पाणिग्राहो जपति इममश्मानमारोह इति' (२-२-३,४) इति। गृह्यासङ्ग्रहे च —

"विवाहे यो विधिः प्रोक्तो मन्त्रा दाम्पत्यवाचकाः।
वरस्तु तान् जपेत्सर्वानृत्विग्राजन्यवैश्ययोः॥" इति॥

**६७. सकृद्गृहीतमञ्जलिं लाजानां वध्वञ्जलावावपेत् भ्राता ॥**

भ्राता सन्निधानाद्वध्वाः शमीपलाशमिश्राणां लाजानामञ्जलिं वध्वञ्जलावुपस्तीर्यावपेत् ॥ १९ ॥

**६८. सुहृद्वा कश्चित् ॥ २० ॥**

सुहृत् भ्रातृस्थानो भ्रातुरभावे। तथा चाश्वलायनगृह्यसूत्रे 'भ्राता वा भ्रातृस्थानो वा लाजानावपति' इति। भ्रातृस्थानश्च गृह्यकारिकायामुक्तः —

"भ्रातृस्थानः पितृव्यस्य मातुलस्य च यस्सुतः।
मातृष्वसुस्सुतस्तद्वत्सुतस्तद्वत्पितृष्वसुः ॥" इति ॥ २० ॥

६९. तं साग्नौ जुहुयादविच्छिद्याञ्जलिमियं नारीति ॥ २१॥

तं शमीपलाशमिश्रं लाजाञ्जलिमभिघारितमग्नौ जुहुयात।

"सोमप्रकृतिरेखा हि लाजानाश्रित्य तिष्ठति।
विरुद्धमाज्यं सोमेन नाभिघारणमर्हति ॥

शमीपलाशमिश्राणां लाजानामभिघारणं।
पूर्वाणामुपक्लृप्तानामाचार्यैः कल्पितं तथा ॥"

इति गृह्यसङ्ग्रहवचनात शमीपलाशमिश्राणां लाजानामुपस्तरणाभिघारणे भवत एव। उपस्तरणाभिघारणे स्विष्टकृद्धोमवत्। कथं जुहुयात्? अञ्जलिं वराञ्जलेरविच्छिद्य। होमप्रकारश्च शाखान्तरे पठ्यते—

"अङ्गुल्यग्रैर्न होतव्यं तथा चाङ्गुलिभेदतः।
अङ्गुलीवामपार्श्वेन लाजहोमो विधीयते ॥"

इति। तदा 'इयं नारी' इत्यादिं मन्त्रं वरः पठेत्। वैवाहिकमन्त्राणां वरपठनीयत्वात् ॥ २१ ॥

प्रसङ्गादुत्तरयोर्लाजहोमयोर्मन्त्रावाह—

७०, अर्यमणं पूषणमित्युत्तरयोः ॥ २२ ॥

७१. हुते तेनैव गत्वा प्रदक्षिणमग्निं परिणयेत्कन्यला पितृभ्य इति ॥ २३ ॥

लाजहोमानन्तरं तेनैव प्रकारेण पूर्ववदनुपृष्ठं वध्वा अञ्जलिमविमुञ्चन्नुत्तरतो गत्वा प्रदक्षिणं यथा भवति तथाग्निं परि सर्वतो नयेत् अग्निं प्रादक्षिण्येन भ्रामयेद्वधूं 'कन्यला' इत्यादिना मन्त्रेण । प्रदक्षिणे लाजाज्यस्रुवोदकुम्भदृषत्पुत्रणामन्त्व-र्भावः । ऋत्विक्‌ब्रह्मोदकुम्भधारकमातॄणां बहिर्भावः ॥ २३ ॥

७२. अवस्थानप्रभृत्येवं त्रिः ॥ २४ ॥

दक्षिणतोऽवस्थानं, अश्माधिरोहणं, लाजहोमः, उत्तरतो गमनं, परिणयनं च त्रिवारमुक्तप्रकारेण कर्तव्यानि । विशेषस्तु द्वितीयावृत्तौ 'अर्यमणं' इत्यादिः तृतीयावृत्तौ 'पूषणं' इत्यादिश्च लाजहोममन्त्रः ॥ २४ ॥

७३. शूर्पेण शिष्टानग्नावोप्य प्रागुदीचीमुत्क्रमयेदेकमिष इति ॥

वधूः शिष्टान् लाजान् शूर्पेणाग्नावावपेत्तूष्णीम् । वरस्तु प्रजापतिं ध्यायेत् ।' तस्यां तूष्णीं तु जुह्वत्यां वरो ध्यायेत्प्रजापतिं ।' 'प्रजापतिं चतुर्थ्यन्तं स्वाहायुक्तं वरस्स्मरेत् ' इति वचनाभ्यां । एवं शिष्टान् लाजानग्नावोप्य स्थितां स्वाभिमुखीं वधूं वर ऐशानीं दिशं प्रत्युत्क्रमयेत् 'एकमिषे' इत्यादिभिस्सप्तभिर्मन्त्रैस्सप्त पदानि । ओप्य उत्क्रमयेदित्यत्र ओप्य स्थितामुत्क्रमयेदिति ल्यप उपपत्तिः । उत्क्रमणे दक्षिणं पादमुद्धृत्य वामं चानुन्यसेत्ततः । वामेन दक्षिणं न लङ्घयेत ।' गोभिलश्च 'दक्षिणेन प्रक्रम्य

सव्येनानुक्रामेत् । मा सव्येन दक्षिणमतिक्रामेति ब्रूयात् ।' (२-२-११, १२) इति । सप्तमपदोत्क्रमणानन्तरं वधूमीक्षमाणः 'सखा सप्तपदी' इत्यादिना मन्त्रेणाशासीत ॥ २५ ॥

**७४. ईक्षकावेक्षणरथारोहणदुर्गानुमन्त्रणान्यभिरूपाभिः ॥**

उक्तानि कर्माणि अभिरूपाभिरर्थत उचिताभिः ऋग्भिः कार्याणि । ईक्षकावेक्षणे 'सुमङ्गलीरियं' इत्यादिं मन्त्रं जपेत् । ईक्षकान् वीक्ष्यानुमन्त्रणमीक्षकावेक्षणम् । 'प्रेक्षकाननुमन्त्रयते...' इति जैमिनिः । 'ईक्षकान् प्रतिमन्त्रयेत्...' (२-२-१३) इति गोभिलः । रथारोहणादीनि लेखाहोमानन्तरं कर्तव्यानि । तत्र तत्तन्मन्त्रान् वक्ष्यामः । २६ ॥

ईक्षकावेक्षणानन्तरमाह —

**७५. अपरेणाग्निमौदको गत्वा पाणिग्राहं मूर्धन्यवसिञ्चेत् वधूं च समञ्जन्त्वित्ति ॥ २७ ॥**

उदकुम्भधारकोऽग्नेः पश्चिमतो गत्वा पाणिग्राहमभिषिञ्चेत् कुम्भजलैकदेशेन, तथा वधूं च शिष्टेन । स्वाभिषेककाले वध्वभिषेककाले च 'समञ्जन्तु' इत्यादिं मन्त्रं वरो जपेत् वरजप्यत्वाद्विवाहमन्त्राणाम् । केचित्तु उदकुम्भधारको ब्रह्माग्न्योरन्तरा गत्वाभिषिञ्चेदिति वदन्ति । तदयुक्तम् 'तमन्तरेणाहवनीयं च यजमानस्य सञ्चरो नान्येषाम्' (द्रा. श्रौ. सू- १२-२-२७) इति यजमानभिन्नानां ब्रह्माग्न्योरन्तरा गमनस्य निषेधात् ॥ २७ ॥

**७६. अवसिक्तो दक्षिणं पाणिं साङ्गुष्ठं गृह्णीयात् गृभ्णामि त इति षड्भिः ॥ २८ ॥**

अवसिक्तः पतिर्बध्वा अञ्जलिं वामहस्तेन गृहीत्वा दक्षिणेन तस्या दक्षिणं पाणिं साङ्गुष्ठं गृह्णीयात् वध्वञ्जले-रविमोचनीयत्वात्। अवसेकः पाणिग्रहणं च सप्तमपदस्थान एव। ततोऽग्निं प्रदक्षिणं गत्वोपविश्योपरिष्टात्तन्त्रं—व्याहृति-होमः प्रायश्चित्तहोमः समिदाधानं अनुपर्युक्षणं यज्ञवास्तु ब्रह्मो-द्वासनं वामदेव्यगानं (१५९)—समापयेत्। अत्र पूर्णपात्रादि (१६१) ब्रह्मणो दक्षिणा। तथा च कर्मप्रदीपः—

"ब्रह्मणे दक्षिणा देया यत्र या परिकीर्तिता।
कर्मान्तेऽनुच्यमानायां पूर्णपात्रादिका भवेत्॥" इति॥

**इति प्रथमे पटले तृतीयः खण्डः॥**



७७. प्रागुदीचीमुद्वहेत् ॥ १ ॥

प्रागुदीचीं प्रागुदीच्यां दिशि वर्तमानं ब्राह्मण-कुलमित्यर्थः उत्तरसूत्रे ब्राह्मणकुल इत्यारम्भात् । गोभिलश्च—'उद्वहन्ति प्रागुदीच्यां दिशि यद्ब्राह्मणकुलमभिरूपम्' (२-३-१) इति । उद्वहेत् नयेदश्वेन डोलिकया वा वधूं अग्निं च । यथोक्तायां दिशि अन्यत्र वा यथोक्तकुलाप्राप्तौ विवाहवेद्यामेव वक्ष्यमाणं लेखाहोमादिकं कुर्यात् । तथा च गृह्यान्तरम्—'अथोत्तरविवाहः प्रागुदीच्यामन्यत्र ब्राह्मणकुले मन्त्रवति वेद्यां वा' इति ॥ १ ॥

७८. ब्राह्मणकुलेऽग्निमुपसमाधाय पश्चादग्नेर्लोहितं चर्मा-नडुहमुत्तरलोम प्राग्ग्रीवमास्तीर्य वाग्यतामुप-वेशयेत् ॥ २ ॥

लक्षणं कृत्वा अग्निं निधाय तस्य पश्चाल्लोहितमार्षभं चर्म यथोक्तमास्तीर्य कृतमौनां वधूमुपवेशयेत् ॥ २ ॥

७९. प्रोक्ते नक्षत्रेऽन्वारब्धायां स्रुवेणोपघातं जुहुयात् षड्भिर्लेखाप्रभृतिभिस्संपातानवनयन् [1]मूर्धनि वध्वाः ॥

प्रोक्ते नक्षत्रे नक्षत्राणि दृश्यन्त इति कथिते वध्वा-मन्वारब्धायां वरः स्रुवेणोपघातं जुहुयात् षडाज्याहुतीर्लेखा-सन्धिष्वित्यादिभिष्षड्भिर्मन्त्रैः । होमस्यास्याज्यहविष्कतया पुरस्ताद्वच समहाव्याहृतिहोमः । संपातान् आहुत्यनन्तरं स्रुवलग्नान् आज्यबिन्दून् वध्वा मूर्ध्नि गालयेत् । उक्तानां षण्णामेवाहुतीनां संपातावनयनं, नेतरासाम् ॥ ३ ॥

---

1. मूर्ध्नि—ग

८०. **प्रदक्षिणमग्निं परिक्रम्य ध्रुवं दर्शयति ध्रुवा द्यौरिति ॥**

पतिर्मन्त्रं जपन् वधूं ध्रुवं दर्शयेत् ।

अस्मिन् कालेऽरुन्धतीदर्शनमाचर्यते । न तत्सूत्रितमाचार्यैः । गोभिलेन तु सूत्रितम्—'अरुन्धतीं च । रुद्धाहमस्मीत्येवमेव ।' (२-३-१०, ११) इति । पतिर्वधूमरुन्धतीं दर्शयेत । सा तामालोक्य 'अरुन्धत्यसि रुद्धाहमस्मि रामेण सीता' इतिवत्पत्युरात्मनश्च नामग्रहणसहितं ब्रूयात् इत्यर्थः ॥

८१. **अभिवाद्य गुरून् गोत्रेण विसृजेद्वाचम् ॥ ५ ॥**

गुरून् पतिश्वशुरादीन् गोत्रेण पतिगोत्रेण—केचित् पितृगोत्रमिच्छन्ति— अभिवाद्य मौनं त्यजेत् । ततः तन्त्रसमापनं, वामदेव्यगानं च ॥ ५ ॥

८२. **गौर्दक्षिणा ॥ ६ ॥**

ब्रह्मणः ॥ ६ ॥

८३. **अत्रार्घ्यम् ॥ ७ ॥**

अत्र अस्मिन् काले पाणिग्रहणदिने रात्रौ कन्यादाता वराय तत्पित्रादिभ्यश्च अर्घ्यं मधुपर्कं दद्यात् । अयमाचार्याभिप्रायः ॥ ७ ॥

८४. **आगतेष्वित्येके ॥ ८ ॥**

केचित्पुनः वरादिषु विवाहार्थमागतेषु विवाहात्पूर्वं दद्यादिति मन्यन्ते । तथा च शास्त्रान्तरम्—

"अशोककलिकापानं यज्ञसोमलतारसम् ।
विवाहे मधुपर्के च भुक्त्वा कर्म समारभेत् ॥" इति ॥८॥

८५. त्रिरात्रं क्षारलवणे दुग्धमिति वर्जयानौ सह [1]शयीयातां ब्रह्मचारिणौ ॥ ९ ॥

क्षारं च लवणं च क्षारलवणे । क्षारश्च —

"तिलमुद्गादृते शिम्बिसस्ये गोधूमकोद्रवौ ।
चीनकं देवधान्यं च सर्वशाकं तथैव च ।
खिन्नधान्यं तथौषध्यं स्थूलं क्षारगणस्स्मृतः ॥"

इति स्मृत्युक्तम् । लवणं प्रसिद्धम् । दुग्धमुद्धृतसारं पिण्याकादि । इतिस्समुच्चये । एतान्यभुञ्जानौ ब्रह्मचारिणौ भूमौ स्वस्तरादिषु वा—न खट्वायां— सह शयीयातां दम्पती इति शेषः । '......भूमौ सह शयीयातां' (२-३-१५) इति गोभिलः ॥

८६. हविष्यमन्नं परिजप्यान्नपाशेनेत्यसाविति वध्वा नाम ब्रूयात् ॥ १० ॥

मधुपर्कार्हणानन्तरमानीतं हविष्यं अनिषिद्धमन्नं घृताक्तं पात्रस्थं पाणिनाभिमृशन् 'अन्नपाशेन' इत्यादिमन्त्रत्रयं वरो जपेत् । तृतीयमन्त्रान्ते 'असौ' शब्दस्थाने वध्वा नाम ब्रूयात् ॥

८७. भुक्त्वोच्छिष्टं वध्वै दद्यात् ॥ ११ ॥

परिजपितमन्नं किंचिद्भुक्त्वा उच्छिष्टमवशिष्टं वध्वै दद्यात् । सा च भुञ्जीत । अन्यदन्नं तृप्तिपर्यन्तं भुक्त्वा आचामेत् ॥

---

1. शय्यातां—क. ख. घ. च. छ. ज.

अथ रथारोहणादीनि कर्माणि। तानि चाभिरूपाभिः ऋग्भिः कर्तव्यानीति (७४) सङ्ग्रहेण सूचितमाचार्यैः। गोभिलस्तु विस्तरेणाह। तानि सूत्राण्यधो लिख्यन्ते ॥

"यानमारोहन्त्यां सुकिंशुकं शल्मलिमित्येतामृचं जपेत्। अध्वनि चतुष्पथान् प्रतिमन्त्रयेत नदीश्च विषमाणि च महावृक्षान् श्मशानं च माविदन् परिपन्थिन इति। अक्षभङ्गे नद्धाविमोक्षे यानविपर्यासेऽन्यासु चापत्सु यमेवाग्निं हरन्ति तमेवोपसमाधाय व्याहृतिभिर्हुत्वान्यद्द्रव्यमाहृत्य य ऋते चिदभिश्रिष इत्याज्यशेषेणाभ्यञ्ज्यात्। वामदेव्यं गीत्वारोहेत्। प्राप्तेषु वामदेव्यं। गृहागतां पतिपुत्रशीलसंपन्ना ब्राह्मण्यः अवरोप्यानडुहे चर्मण्युपवेशयन्तीह गावः प्रजायध्वमिति। तस्याः कुमारमुपस्थ आदध्युः। तस्मै शकलोटानञ्जलावावपेयुः फलानि वा। उत्थाप्य कुमारं ध्रुवा आज्याहुतीर्जुहोत्यष्टाविह धृतिरिति। समाप्तासु समिधमाधाय यथावयसं गुरून् गोत्रेणाभिवाद्य यथार्थम् ॥" (गो. सू. २, ४, १—१०)

दम्पत्योः त्रिरात्रं क्षारलवणदुग्धवर्जनं सव्रतं सहशयनं च ॥

**८८. ऊर्ध्वं त्रिरात्राच्चतसृभिराज्यं जुहुयादग्ने प्रायश्चित्तिरिति समस्य पञ्चमीं संपातानवनयन्नुदपात्रे ॥ १२ ॥**

चतुर्थेऽहनि उक्तमन्त्रैर्हुत्वा संपातान् स्नानपर्याप्तोदकपूरिते पात्रेऽवनयेत ॥ १२ ॥

**८९. तेनैनां सकेशनखामाप्लावयेत् ॥ १३ ॥**

संपातयुक्तजलेन स्नापयेत् ॥ १३ ॥

९०. ततो यथार्थं स्यात् ॥ १४ ॥

व्याहृतिहोमप्रभृतितन्त्रसमापनं कुर्यात् ॥ १४ ॥

अथ गर्भाधानम् —

९१. ऋतुकाले दक्षिणेन पाणिनोपस्थमालभेद्विष्णुर्योनिं कल्पयत्विति ॥ १५ ॥

ऋतुकाले रजोदर्शनानन्तरं षोडश रात्रयः ऋतुकालः तस्मिन् । तथा च याज्ञवल्क्यः—

"षोडशर्तुर्निशास्त्रीणां तासु युग्मासु संविशेत् ।
ब्रह्मचार्येव पर्वाणि आद्याश्चतस्रस्तु वर्जयेत् ॥" इति ।

कुत्सितत्वादालम्भ्यप्रदेशस्य वामपाणिप्रसक्तौ तन्निवृत्त्यर्थं दक्षिणेनेत्याह ॥ १५ ॥

९२. समाप्तायां संभवेद्गर्भं धेहीति ॥ १६ ॥

'विष्णुर्योनिं कल्पयतु' इत्यारम्भायां ऋचि समाप्तायां 'गर्भं धेहि' इत्यादिं मन्त्रमुक्त्वा संभवेत् वधूमभिगच्छेत् । पाठक्रमेणैवानन्तर्ये सिद्धे समाप्तायामिति वामदेव्यगाननिवृत्त्यर्थम् । गोभिलश्च— 'समाप्यर्चौ संभवतः' (२.५.१०) इति ॥ १६ ॥

इति प्रथमे पटले चतुर्थः खण्डः ॥



पूर्वस्मिन् खण्डे विवाहमुक्त्वा वक्तव्यमौपासनमतिलङ्घ्य गर्भाधानमुक्तम् प्रजार्थत्वाद्विवाहस्य, प्रजायाश्च गर्भाधानरूप-संस्काराभावे दुष्टत्वापत्तेश्च । इदानीं तदौपासनमाह —

**९३. यस्मिन्नग्नौ पाणिं गृह्णीयात्स गृह्यः ॥ १ ॥**

यस्मिन्नग्नौ पाणिं जिघृक्षन्नाज्यलाजादिकं जुहोति स गृह्यनामा । तथा च गोभिलः—'स यदेवान्त्यां समिधमादधाति जायाया वा पाणिं जिघृक्षन् जुहोति तमभिसंयच्छेत् । स एवास्य गृह्योऽग्निर्भवति' (१-१-२०,२१) इति ॥ १ ॥

**९४. यस्मिन् वान्त्यां समिधमादध्यात् ॥ २ ॥**

यस्मिन्नग्नौ आचार्याग्निव्यतिरिक्ते अन्त्यां समिधं समावर्तनात्पूर्वमादध्यात् 'अग्नये समिधं' इत्यादिना मन्त्रेण स वा गृह्यः । अस्मिन्नग्नावेव विवाहहोमः कर्तव्यः ॥ २ ॥

अग्निसंपादनप्रकारमाह —

**९५. निर्मन्थ्यो वा पुण्यस्सोऽनर्द्धुकः ॥ ३ ॥**

मथिताग्निर्वा । स पुण्यप्रदः । किन्तु, ऋद्धिकरो न भवति ॥ ३ ॥

**९६. अम्बरीषाद्वानयेत् ॥ ४ ॥**

भ्राष्ट्राद्वा । भ्राष्ट्रस्सक्त्वादिभर्जनपात्रं तत्स्थानात् ॥ ४ ॥

**९७. बहुयाजिनो वागाराच्छूद्रवर्जम् ॥ ५ ॥**

बहुयाजिनो ब्राह्मणस्य अगारात्। वेत्यनेन क्षत्रियस्य वैश्यस्य वागारादिति गम्यते। न कदापि शूद्रस्य गृहादानयेत्। अग्निविशेषस्य फलमुक्तं गृह्यान्तरे— 'ब्राह्मणकुलाद्ब्रह्मवर्चसकाम अग्निमाहृत्यादधीत, राजन्यादोजोवीर्यकामः, वैश्यात्पुत्रपशुकामः, अम्बरीषाद्धनधान्यकामः, आरणेयमुरुपुण्यकोशकामः' इति ॥ ५ ॥

९८. सायमाहुत्युपक्रमं [1]परिचरणम् ॥ ६ ॥

सायमाहुत्युपक्रमं सायमाहुत्या यदुपक्रम्यते तत् तथाविधमेव परिचरणमस्मिन् गृह्येऽग्नौ विधीयते इति शेषः। तथा च गोभिलः—'सायमाहुत्युपक्रम एवात ऊर्ध्वं गृह्येऽग्नौ होमो विधीयते' (१-१-२३) इति। अतः पाणिग्रहणदिने सायमारभ्यौपासनहोमः कर्तव्यः। तथा च शौनकः—

"यस्मिन्नह्नि विवाहस्स्यात् सायमारभ्य तस्य तु।
परिचर्यां विवाहाग्नेर्विदधीत स्वयं द्विजः॥" इति।

एवमेवान्त्यसमिदाधानाग्निपक्षेऽपि। तदेतत्सायंप्रातरुभयकालिकं परिचरणमेकमेव कर्म। तथा च कात्यायनः —

"सायमादि प्रातरन्तमेकं कर्म प्रचक्षते।
दर्शान्तं पौर्णमासादि त्वेकमेव मनीषिणः॥" इति ॥६॥

परिचरणप्रकारमाह—

९९. प्रागस्तमयोदयाभ्यां प्रादुष्कृत्य ॥ ७ ॥

प्रादुष्कृत्य प्रज्वाल्य ॥ ७ ॥

---

1. परिचरणं तन्त्रम् — घ

१००. अस्तमिते होमः ॥ ८ ॥

१०१. उदिते च ॥ ९ ॥

स्पष्टं । उदयलक्षणं च—

"रेखामात्रं तु दृश्येत रश्मिभिश्च समन्वितम् ।
उदयं तं विजानीयात् होमं कुर्याद्विचक्षणः ॥" इति ॥

१०२. अनुदिते वा ॥ १० ॥

वाशब्दो विकल्पे । अनुदयलक्षणं च गृह्यासङ्ग्रहे—

"रात्रेष्षोडशभे भागे ग्रहनक्षत्रभूषिते ।
अनुदयं विजानीयात् होमं तत्र प्रकल्पयेत् ॥" इति ।

मृदुलायां 'संपूर्णादित्यमण्डलरूपदर्शनोपलक्षितः काल उदितः । उदयात् पूर्वमरुणकिरणवान् प्रविरलतारकोऽनुदितः ।' इति ॥ १० ॥

होमद्रव्यं द्विविधं कठिनद्रव्यं द्रवद्रव्यं चेति । तत्र कठिनद्रव्यहोमे प्रकारमाह—

१०३. हविष्यस्यान्नस्याकृतं चेत्प्रक्षाल्य जुहुयात्पाणिना ॥

कठिनद्रव्यं द्विविधं कृतमकृतं चेति । कृतं पक्वं । अकृतमपक्वम् । पक्वं हविश्चेत्तर्हि पक्वस्य हविष्यस्य माषकोद्रवादि-भिन्नस्य—अवयवलक्षणा षष्ठी—अवशेषं यथा भवति तथा आदाय जुहुयात् दक्षिणेन पाणिना । आहुतिप्रमाणं चोक्तं कात्यायनेन—

"पाण्याहुतिर्द्वादशपर्वपूरिका कंसादिना चेत्स्रुवमात्रपूरिका ।
दैवेन तीर्थेन च हूयते हविस्स्वङ्गारिणि स्वर्चिषि तच्च पावके ॥"

इति । आहुतिप्रकारश्च तेनैवोक्तः —

"उत्तानेनैव हस्तेन ह्यङ्गुष्ठाग्रेण पीडितम् ।
संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्धविः ॥" इति ।

अतः अङ्गुष्ठभिन्नाङ्गुलिचतुष्टयपूरणमात्रं हविरङ्गुष्ठाग्रेण पीडितं देवतीर्थेन जुहुयादिति लभ्यते ।

हविष्यलक्षणं च कर्मप्रदीपे —

"हविष्येषु यवा मुख्यास्तदनु व्रीहयस्स्मृताः ।
माषकोद्रवगौरादीन् सर्वालाभेऽपि वर्जयेत् ॥" इति ।

अपक्वं चेत् तण्डुलादीन् प्रक्षाल्य त्रिवारं—दैवत्वात् (१४२)—जुहुयाद्दक्षिणेन पाणिना । तण्डुलादीनपि शुष्कान् कृत्वैव नार्द्रान् । '···प्रोदकं कृत्वा' (१-३-७) इति हि गोभिलः ॥

द्रवद्रव्येषु दधिपयसोर्होमे प्रकारमाह —

**१०४. दधि चेत्पयो वा कंसेन ॥ १२ ॥**

कंसेन कांस्यपात्रेण । जुहुयादित्यनुवर्तते ॥ १२ ॥

**१०५. चरुस्थाल्या वा ॥ १३ ॥**

यस्यां स्थाल्यां चरुः श्रप्यते सा चरुस्थाली तया वा । जुहुयादिति वर्तते ॥ १३ ॥

**१०६. अग्नये स्वाहेति मध्ये ॥ १४ ॥**

सायंहोमप्रकारोऽयम् ॥ १४ ॥

१०७. तूष्णीं प्रागुदीचीमुत्तराम् ॥ १५ ॥

तूष्णीं मनसा 'प्रजापतये स्वाहा' इति मन्त्रदेवते अनुसन्धायेत्यर्थः।

तूष्णींशब्दादत्र प्रजापतिर्देवता। 'तस्मात्प्राजापत्यां मनसा जुह्वति मनो हि प्रजापतिः' इति ब्राह्मणम्। जैमिनिश्च 'सायंप्रातर्होमेऽग्नय इति प्रथमामाहुतिं जुहोति प्रजापतय इत्युत्तरामेवं प्रातरग्निस्थाने सूर्यः…' (१-२३) इति ॥ १५ ॥

१०८. सूर्यायेति प्रातः पूर्वाम् ॥ १६ ॥

'सूर्याय स्वाहा' इति प्रातः पूर्वाहुतिः। उत्तराहुतिस्तु पूर्ववत् ॥ १६ ॥

१०९. नात्र परिसमूहनादीनि पर्युक्षणवर्जम् ॥ १७ ॥

परिसमूहनादीनि पूर्वोक्तानि होमाङ्गानि अत्र न भवन्ति। पर्युक्षणं तु भवति। पर्युक्षणमिति प्रसेकस्याप्युपलक्षणम्। तौ च पुरस्तादुपरिष्टाच्च भवतः। तथा च गोभिलो नित्यहोमप्रकरणे पुरस्तादङ्गान्याह—

अग्निमुपसमाधाय परिसमुह्य दक्षिणजान्वक्तो दक्षिणेनाग्निमदितेऽनुमन्यस्वेत्युदकाञ्जलिं प्रसिञ्चेत्। अनुमतेऽनुमन्यस्वेति पश्चात्। सरस्वत्यनुमन्यस्वेत्युत्तरतः। देवसवितः प्रसुवेति प्रदक्षिणमग्निं पर्युक्षेत्सकृद्वा त्रिर्वा। पर्युक्षणान्तान् व्यतिहरन्नभि-

पर्युक्षन् होमीयम् ॥' (१.१.१-५) इति । अत्र परिसमूहन-ममन्त्रकम् ॥

उपरिष्टादङ्गानि च स एव—'समिधमाधायानुपर्युक्ष्य तथैवोदकाञ्जलीन् प्रसिञ्चेदन्वमँस्था इति मन्त्रविशेषः ।' (गो.सू.१-३-११) इति । अनुपर्युक्षणे देवसवितः प्रसुवेत्यादिरेव मन्त्रः । अनुप्रसेक एव मन्त्रविशेषस्य विधानात् ।

यद्यप्याचार्यैर्होमपूर्वाङ्गकथनावसरे प्रसेकपर्युक्षणे उक्ते तथाप्यनुपर्युक्षणानुप्रसेकौ नोक्तौ । तत्र रुद्रस्कन्दोऽनुपर्युक्षणे 'देवसवितः प्रासावीः' इति मन्त्रं गृह्यान्तरात्प्रापयति । तदपेक्षया गोभिलगृह्योक्तं ग्राह्यं प्रतिभातितराम् गोभिलखादिर-गृह्ययोस्समानमन्त्रविनियोजकत्वात् ।

किं च, पर्युक्षणपदस्य प्रसेकपर्युक्षणोभयपरत्वं गौतम-धर्मसूत्रे दृश्यते । 'समिधमाधायानुपर्युक्ष्य यज्ञवास्तु कृत्वा' (२५-५) इत्यत्र मस्करिणा हरदत्तेन चानुपर्युक्ष्येत्यस्य अदितेऽन्वमँस्था इत्यादिभिः पर्युक्ष्येति व्याख्यातम् । कात्या-यनश्च—"पर्युक्षणं तु सर्वत्र कर्तव्यमदितेऽन्विति ।" इति । एवं च नित्यहोमे प्रसेकानुप्रसेकौ भवत इति सिद्धम् ॥ १७ ॥

११०. पत्नी जुहुयादित्येके ॥ १८ ॥

१११. गृह्याः पत्नी गृह्योऽग्निरेष इति ॥ १९ ॥

स्पष्टे । पत्नीहोमे विशेषः स्मृत्यर्थसारे 'पर्युक्षणं विना पत्नी जुहुयात्कन्यकापि वा' इति ॥

अथ नित्यहोमप्रयोगः—सङ्कल्पः, अग्न्युपसमाधानं, उत्तरत्र होमीयनिधानं, अदितेऽनुमन्यस्वेत्यादिभिः प्रसेकः, देव सवितरित्यादिना पर्युक्षणं, तूष्णीं समिदाधानं, पूर्वोत्तराहुती, पुनस्तूष्णीं समिदाधानं, देवसवितरित्यादिनानुपर्युक्षणं, अदितेऽन्वमँस्था इत्यादिभिरनुप्रसेकः, गौपूक्तगानं सायं, आश्वसूक्तगानं प्रातः, वामदेव्यगानं शान्त्यर्थं, अग्न्युपस्थानमिति ।

पुरस्तादुपरिष्टाच्च तूष्णीं समिदाधाने प्रमाणं कात्यायनवचनं —

"समिदादिषु होमेषु मन्त्रदैवतवर्जिता ।
पुरस्ताच्चोपरिष्टाच्च इन्धनार्था समिद्भवेत् ॥" इति ॥

नित्यहोमश्चायं पाणिग्रहणदिने सायं लेखाहोमानन्तरमारम्भणीयः ॥ १९ ॥

अथ वैश्वदेवम् —

**११२. सिद्धे सायंप्रातर्भूतामित्युक्त ओमित्युच्चैर्ब्रूयात् ॥ २० ॥**

सायंप्रातश्शब्दौ रात्रिन्दिवपरौ । दिवा रात्रौ च अन्ने पक्वे सति अग्निमुपसमाधाय, पत्न्या पचनकर्त्र्या वान्यया भूतमिति उक्ते बलिहोमार्थमग्नेरुत्तरतो न्यस्ते चान्ने, गृहपतिरोमित्युच्चैर्ब्रूयात् ॥ २० ॥

**११३. माक्षा नमस्त इत्युपांशु ॥ २१ ॥**

अन्यैर्यथा न श्रूयते तथौष्ठचलनमात्रेण ब्रूयात् ॥ २१ ॥

अथ नित्यहोमवत् पर्युक्ष्य तूष्णीमेकां समिधमाधाय —

**११४. हविष्यस्यान्नस्य जुहुयात् प्राजापत्यं सौविष्टकृतं च ॥**

अवयवलक्षणा षष्ठी । अनिन्दितस्यान्नस्यैकदेशं जुहुयात् । आहुतिमन्त्रः 'प्रजापतये स्वाहा' 'अग्नये स्विष्टकृते स्वाहा' इति । काम्याहुतिश्च 'अग्ने विवा हाउ' साम्ना स्वाहान्तेन । तथा च ब्राह्मणं 'सदा भोजनस्योपनीतस्याग्रमग्नौ जुहुयादग्ने विवस्वदुषस इति पूर्वेण, बलिं चोत्तरेण कुर्याद् बहुपशुधनधान्यो भवति' इति । समिधमाधाय नित्यहोमवदनुपर्युक्षेत् । एष देवयज्ञः ॥

**११५. बलीन्नयेत् ॥ २३ ॥**

स्पष्टम् । कर्मप्रदीपे बलिप्रमाणमुक्तम्—'न चावराद्धर्या बलयो भवन्ति महामार्जारश्रवणप्रमाणात्' । मार्जारकर्णादून-परिमाणा न भवन्तीत्यर्थः । आर्द्रामलकपरिमाणा बलय इति केचित् 'आर्द्रामलकमानेन कुर्याद्धोमहविर्बलीन्' इति वचनात् ॥

बलिस्थानान्याह—

**११६. बहिरन्तर्वा चतुर्निधाय ॥ २४ ॥**

अग्निशालाया बहिरन्तर्वा । एतेषां चतुर्णां बलीनां सह पाठादादावन्ते च सकृत्परिषेचनम् । एतेषां देवताः पश्चा-द्वक्ष्यति ॥ २४ ॥

**११७. मणिकदेशे ॥ २५ ॥**

उदधानसमीपे ॥ २५ ॥

**११८. मध्ये ॥ २६ ॥**

गृहमध्ये ॥ २६ ॥

११९. द्वारि ॥ २७ ॥

गृहमध्यद्वारे ॥ २७ ॥

१२०. शय्यामनु ॥ २८ ॥

शयनसमीपे ॥ २८ ॥

१२१. वर्चं वा ॥ २९ ॥

वाशब्दस्समुच्चये । 'वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये' इति विश्वः । मूत्रोच्चारदेशसमीपे च, कर्मप्रदीपे तथा दर्शनात् ॥ २९ ॥

१२२. अथ [1]सस्तूपम् ॥ ३० ॥

सस्तूपो नाम संमार्जनरेणुपुञ्जप्रक्षेपस्थानम् । तमनु बलिं हरेत् । क्रमादेवानन्तर्ये सिद्धे 'अथ' इति मध्ये ग्रहणस्य किञ्चित् प्रयोजनं वक्तव्यम् । तच्च प्रतिपादितं भट्टनारायणैः गोभिलसूत्रभाष्येऽस्मिन् प्रकरणे 'अथशब्दो विशिष्टमानन्तर्यं द्योतयति । कथं ? 'प्राच्यूर्ध्वावाचीभ्योऽहरहर्नित्यप्रयोगः'(गो.सू. ४-७-३५) इत्यतिदेशप्राप्तं बलित्रयं दत्त्वा, अथ अनन्तरं रक्षोजनेभ्यो दद्यादिति । कुतः ? ग्रन्थान्तरेऽप्येनस्मिन्नेव क्रम एतेषां विधानात् 'एतेषामपि मन्यवे इन्द्राय वासुकये ब्रह्मण इति' इति' ॥

एवं च इन्द्रवासुकिब्रह्मभ्यो बलित्रयं दत्त्वा उक्तदेशे बलिं दद्यादिति सिद्ध्यति । बलित्रयञ्चैतत् वास्तुहोमे दिक्षु अवान्तरदिक्षु ऊर्ध्वमधस्ताच्च ह्रियमाणानां बलीनां सङ्ग्रहरूपं गोभिलेन नित्यं कर्तव्यत्वेन विहितं कात्यायनेन वैश्वदेवे चातिदिष्टम् ।

1. संस्तूपम्—घ

आचार्यैरपि वास्तुहोमे दिशामवान्तरदिशामूर्ध्वावाचीभ्यां च (५२६, ५२७) बलयो विहिताः ॥ ३० ॥

१२३. एकैकमुभयतः परिषिञ्चेत् ॥ ३१ ॥

मणिकदेशमारभ्यैकैकं पुरस्तादुपरिष्टाच्च परिषिञ्चेत। एष भूतयज्ञः ॥ ३१ ॥

१२४. शेषमद्भिस्सार्धं दक्षिणा निनयेत् ॥ ३२ ॥

बलिहरणशिष्टमन्नमद्भिस्सार्धं दक्षिणस्यां दिशि प्राचीनावीती पितृतीर्थेन 'पितृभ्यः स्वधा' इति निदध्यात्।

"स्वाहाकारवषट्कारनमस्कारा दिवौकसां।
स्वधाकारः पितृणां च हन्तकारो नृणां मतः॥"

इति कर्मप्रदीपोक्तेः। अयं पितृयज्ञः ॥ ३२ ॥

१२५. फलीकरणानामपामाचामस्येति[1] विश्राणिते ॥३३॥

विश्राणिते दत्ते अन्न इति शेषः। अतिथिभोजनरूपमनुष्ययज्ञे कृत इत्यर्थः। कम्बूकानामपामोदनावस्रंसनस्य च बलिं हरेदिति शेषः। इतिना एकीकरणमुच्यते। त्रीण्येकीकृत्य बलिमेकं दद्यादित्यर्थः। अतिथिभोजनाभावे 'मनुष्येभ्यो हन्त' इति निवीती बलिं दद्यात् ॥ ३३ ॥

१२६. पृथिवी वायुः प्रजापतिर्विश्वे देवा आप ओषधिवनस्पतय आकाशः कामो मन्युर्वा रक्षोगणाः पितरो रुद्र इति बलिदैवतानि ॥ ३४ ॥

---

1. आचामस्येति—क ख ग घ च छ ज

बहिरन्तर्वा चतुर्णां पृथिवी वायुः प्रजापतिर्विश्वे देवाः। मन्त्रश्च नमोऽन्तं चतुर्थ्यन्तं तत्तन्नाम। पृथिव्यै नमः, वायवे नमः, प्रजापतये नमः, विश्वेभ्यो देवेभ्यो नमः, इतिवत्। एवं सर्वत्र। मणिकदेशे आपः अद्भ्यो नम इति, मध्य ओषधिवनस्पतयः ओषधिवनस्पतिभ्यो नम इति, द्वार्याकाशः आकाशाय नम इति, शयनसमीपे कामः कामाय नमः इति, वर्चसमीपे मन्युर्मन्यवे नम इति, सस्तूपसमीपे रक्षोगणाः रक्षोगणेभ्यो नमः इति, दक्षिणतः पितरः पितृभ्यः स्वधेति, ऐशान्यां रुद्रः रुद्राय नम इति। 'अमुष्मै नम इत्येव बलिदानं विधीयते' इति कर्मप्रदीपोक्तेर्नमोऽन्तमेव बलिहरणं कुर्यात्॥ ३४॥

१२७. तूष्णीं तु कुर्यात्॥ ३५॥

बलिदानमन्त्रं मनसा स्मरन् कुर्यात्। लोकवार्तां वा परिवर्जयेत्। एकत्र सर्वबलिहरणे कर्मप्रदीपः —

'अथ तद्विन्यासो वृद्धिपिण्डानिवोत्तरोत्तरांश्चतुरो बलीन् निदध्यात् — पृथिव्यै वायवे विश्वेभ्यो देवेभ्यः प्रजापतय इति। सव्यत एतेषामेकैकस्यैकैकं अद्भ्य ओषधिवनस्पतिभ्य आकाशाय कामायेति। एतेषामपि मन्यव इन्द्राय ब्रह्मणे वासुकय इति। एतेषामपि रक्षोजनेभ्य इति। सर्वेषां दक्षिणतः पितृभ्य इति। चतुर्दश नित्याः। आसस्थप्रभृतयः काम्याः। सर्वेषामुभयतः परिषेकः। पिण्डवच्च पश्चिमा प्रतिपत्तिः' इति॥

पिण्डानामिव बलीनामपि गवादिषु पश्चिमा प्रतिपत्तिरित्यर्थः। अत्र खादिरसूत्रानुसारिणां प्रथमबलिचतुष्टये पृथिव्यै वायवे प्रजापतये विश्वेभ्यो देवेभ्य इति देवताक्रमभेदमनुसृत्य

बलिहरणं विशेषः । तुल्यमन्यत् । रक्षोबलेः पूर्वतः 'अग्ने विवस्वदुषसः' साम्ना काम्यबलिः । ततः पूर्वं मनुष्यबलिः ॥

तदिदं बलिहरणं वैश्वदेवहोमश्चाहरहर्यत्पच्यते तेनैवान्नेन कर्तव्यौ । न त्वेतदर्थं पृथगन्नापेक्षेत्याह—

१२८. सर्वस्य त्वन्नस्यैतत्कुर्यात् ॥ ३६ ॥

सर्वस्य दैवस्य पित्र्यस्य वान्नस्यैकदेशेनैतद्वैश्वदेवहोमबलिहरणरूपं कर्म कुर्यात् । तथा च गोभिलः—'सर्वस्य त्वेवान्नस्यैतान् बलीन् हरेत् पित्र्यस्य वा स्वस्त्ययनस्य वार्थार्थस्य वा' (१-४-२०) इति ॥ ३६ ॥

१२९. असकृच्चेदेकस्मिन् काले सिद्धे सकृदेव कुर्यात् ॥

सायं प्रातर्वा कालवैषम्येन पाकबाहुल्ये प्रतिपाकं न वैश्वदेवं कर्तव्यम् । आत्मसंस्कारार्थत्वाद्वैश्वदेवस्य ॥ ३७ ॥

१३०. बहुधा चेद्गृहपतेः ॥ ३८ ॥

एकस्मिन् गृहे निवसतामविभक्तानां सौकर्यार्थं पाकभेदे सति गृहपतिपाकादेव वैश्वदेवं कर्तव्यम् । न प्रतिपाकमित्यर्थः ॥

गृहपतिपाकात्पूर्वमितरेषां पाकसिद्धौ तेषां कर्तव्यमाह—

१३१. सर्वस्य त्वन्नस्याग्नौ कृत्वा अग्रं ब्राह्मणाय दत्त्वा स्वयं कुर्यात् ॥ ३९ ॥

अन्नस्य अदनीयस्यान्नशाकादेः किञ्चिदादायाग्नौ प्रास्य, अग्रं ग्रासचतुष्टयमात्रमन्नं ब्राह्मणाय दत्त्वा स्वयं भुञ्जीत । न गृहपतिवैश्वदेवकरणं प्रतीक्षेत । तथा च गोभिलः 'यस्य त्वेषा-

मग्रतस्सिद्ध्येन्नियुक्तमग्नौ कृत्वाग्रं ब्राह्मणाय दत्त्वा भुञ्जीत' (१-४-२५) इति । 'अनावश्यकत्वेऽपि वैश्वदेवादीनामिदमस्य विशिष्यते यदग्नौ नियोज्यं ब्राह्मणाय दातव्यं' इति तत्रैव तर्कालङ्कारः ॥ ३९ ॥

**१३२. व्रीहिप्रभृत्या यवेभ्यो यवेभ्यो वाव्रीहिभ्यस्स्वयं हरेत् स्वयं हरेत् ॥ ४० ॥**

व्रीह्युत्पत्तिकालं शरदमारभ्य यवोत्पत्तिकालात् वसन्तादर्वाक् बलिं हरेत् । वाशब्दश्चार्थे । तथैव यवेभ्यः वसन्तमारभ्य आ व्रीहिभ्यः शरत्पर्यन्तं च बलिं हरेदिति सूत्रार्थः । देवताद्रव्याकाङ्क्षायां गृह्यान्तरवचनम्—

"यवैर्यवेभ्य आवापो व्रीह्युत्पत्तेरधो बलेः ।
व्रीहिभ्यो व्रीहिभिः पूर्वं यवोत्पत्तेर्जिजीविषोः ॥" इति ॥

एवं च शरदमारभ्य मासषट्कं प्रतिदिनं व्रीह्यन्नेन 'व्रीहिभ्यो नमः' इति, वसन्तमारभ्य मासषट्कं यवान्नेन 'यवेभ्यो नमः' इति च बलिर्हर्तव्य इति फलितस्सूत्रार्थः । गोभिलश्च 'स्वयं त्वेवास्यं बलिं हरेद् यवेभ्योऽध्या व्रीहिभ्यः व्रीहिभ्योऽध्या यवेभ्यस्स त्वासय्यो नाम बलिर्भवति । दीर्घायुर्हैव भवति।' (१-४-२८,२९) इति । काम्यत्वादस्य बलेः, 'स्वयमेव हरेत् काम्यान्' इति स्मरणाद्बलिमिमं स्वयं हरेत् । प्रवासादावपि नान्येन हारयेत् । द्विरुक्तिः पटलसमाप्तये ॥

एवं बलिहरणं कृत्वा अग्निं प्रार्थयेत—

"आयुरारोग्यमैश्वर्यं धृतिं सत्यं बलं यशः ।
तेजो वर्चः पशून् बीजं ब्रह्म ब्राह्मण्यमेव च ॥

सौभाग्यं कर्मसिद्धिं च कुलज्यैष्ठ्यं स्वकर्तृनाम ।
सर्वमेतत्कर्मसाक्षिन् द्रविणोदो रिरीहि नः ॥"

इति । अनन्तरं वामदेव्यगानं शान्त्यर्थम । स ब्रह्मयज्ञः । एवं पञ्च महायज्ञा वैश्वदेवहोमबलिकर्मभ्यामनुष्ठिता भवन्ति ।

तथा च कर्मप्रदीपः—

"होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिभोजनम् ।
श्राद्धं वा पितृयज्ञस्स्यात्पित्र्यो बलिरथापि वा ।
यश्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञस्स उच्यते ॥" इति ।

वैश्वदेवं चेदं गृह्याग्नौ पचनाग्नौ वा कार्यम् । 'औपासने पचने वा' इत्यापस्तम्बवचनात् ।

अस्य वैश्वदेवस्याप्यारम्भः पाणिग्रहणदिने सायं लेखाहोमानन्तरं सायमाहुतिं हुत्वा कर्तव्यः । तथा च कात्यायनः—

"ऊर्ध्वं पूर्णाहुतेः कुर्यात सायंहोमादनन्तरम ।
वैश्वदेवं तु पाकान्ते बलिकर्मसमन्वितम ॥" इति ।

प्रतिमन्त्रं पूर्णाहुतिशब्दवत्त्वाल्लेखाहोमः पूर्णाहुतिः । गृहपतिश्चैतदनन्तरं प्रतिदिनं सायं प्रातः होमबलिकर्मणी कुर्यात् । अन्यश्चेदद्भिस्तर्पयेत् ॥ ४० ॥

इति पट्टाभिरामार्यकृतायां खादिरसूत्रवृत्तौ सूत्रार्थबोधिन्यां
प्रथमे पटले पञ्चमः खण्डः ॥
समाप्तः प्रथमः पटलः ॥



## अथ द्वितीयः पटलः ॥

१३३. पौर्णमासोपक्रमौ दर्शपूर्णमासौ ॥ १ ॥

दर्शश्च पूर्णमासश्च दर्शपूर्णमासौ दर्शपूर्णमासस्थालीपाकावित्यर्थः। तौ पौर्णमासोपक्रमौ। पौर्णमासः प्रथमं कर्तव्यः। दर्शोऽनन्तरम्। न तु प्रसिद्धपाठानुसारेण दर्शस्य पूर्वत्वम्। कालश्च पौर्णमासस्य कृष्णप्रतिपत् दर्शस्य शुक्लप्रतिपत्। 'पक्षान्ता उपवस्तव्याः पक्षादयोऽभियष्टव्याः' इति वचनात्। स्थालीपाकद्वयमप्येकमेव कर्म। तथा च कात्यायनः 'दर्शान्तं पौर्णमासाद्यमेकं कर्म प्रचक्षते' इति ॥ १ ॥

१३४. दार्शं चेत् पूर्वमुपपद्येत पौर्णमासेनेष्ट्वाथ तत्कुर्यात् ॥

यदि विवाहानन्तरं दार्शं पूर्वं संभवति तदा दार्शेन प्रथमं नेष्टव्यम्। किन्तु पूर्वं पौर्णमासेनेष्ट्वा पश्चाद्दार्शं कुर्यात् ॥

१३५. अकुर्वन् पौर्णमासीमाकाङ्क्षेदित्येके ॥ ३ ॥

उपपन्नं दार्शमकुर्वन् पौर्णमासीमाकाङ्क्षेत् पौर्णमासकरणार्थम्। अयं पक्षो नाचार्यसम्मतः। 'एके' शब्दात् ॥ ३ ॥

१३६. अपराह्णे स्नात्वौपवसथिकं दम्पती भुञ्जीयाताम् ॥

पक्षान्ते अमायां पौर्णमास्यां वोपवसथदिने अपराह्णे औपवसथिकं उपवसथे उपवासदिने भवं। तदाह पुलस्त्यः—

"सकृत्पर्वणि सर्पिष्मद्धविष्यं लघुभोजनम्।
न सायं नोपवासस्स्यात्तैलामिषविवर्जितम् ॥" इति ॥

१३७. मानदन्तव्य उवाच श्रेयसीं प्रजां विन्दते काम्यो भवत्यक्षोधुको य औपवसथिकं भुङ्क्ते ॥ ५ ॥

मानदन्तव्यनामा ऋषिरेवमुवाच । यो यजनीयात्पूर्वदिन औपवसथिकं भुङ्क्ते स प्रशस्यतरां प्रजां विन्दते । काम्यो जनानां भवति । अक्षोधुकः क्षुद्रहितश्च । अभोजने दोषमाह गोभिलः—'···य औपवसथिकं नाश्नाति । अनीश्वरो ह क्षोधुको भवत्यकाम्यो जनानां पापवसीयसी हास्य प्रजा भवति ।' (१-६-१,२) इति ॥ ५ ॥

१३८. तस्माद्यत्कामयेत तद्भुञ्जीत ॥ ६ ॥

तस्माद्भोजने गुणश्रवणादुपवसथयोग्यं यदभ्यवहार्यं कामयेत तद् भुञ्जीत गृहपतिस्तत्पत्नी च ॥ ६ ॥

१३९. नाव्रत्यमाचरेत् ॥ ७ ॥

व्रतविरोधि यद्ग्राम्यधर्मादिकं तन्नाचरेत् । एवमुपवसथदिने व्रती भूत्वोत्तरस्मिन्यजनीयदिने ॥ ७ ॥

१४०. प्रातराहुतिं हुत्वा ॥ ८ ॥

स्पष्टम् ॥ ८ ॥

अथ स्थालीपाकसामान्ये कर्तव्यमाह—

१४१. हविर्निर्वपेदमुष्मै त्वा जुष्टं [1]निर्वपामीति देवताश्रयं सकृद्यजुषा द्विस्तूष्णीम् ॥ ९ ॥

---

1. 'निर्वपामि' नास्ति—ख घ ङ च छ ।

नित्यहोमानन्तरं ब्रह्मवरणान्तं कृत्वा होमार्थान् तण्डुलान् चरुस्थाल्यां 'अग्नये त्वा जुष्टं निर्वपामि' इतिवदमुष्मैपदस्थाने चतुर्थ्यन्तमुक्त्वा सकृन्निर्वपेत्। अनन्तरं द्विस्तूष्णीं निर्वपेत्। तण्डुलांश्च पवित्रान्तर्हितान्निर्वपेत्, 'पवित्रान्तर्हितांस्तण्डुलानावपेत्' (१-७-६) इति गोभिलवचनात्। कुशस्य पत्रद्वयं अन्तर्गर्भशून्यं साग्रं प्रादेशप्रमाणं पवित्रं ज्ञेयम्।

"अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्रकुत्रचित्॥"

इति कर्मप्रदीपः॥ ९॥

**१४२. त्रिर्देवेभ्यः प्रक्षालयेत्॥ १०॥**

स्पष्टम्॥ १०॥

**१४३. द्विर्मनुष्येभ्यः॥ ११॥**

कृसरस्थालीपाके, भोजनार्थपाके च॥ ११॥

**१४४. सकृत्पितृभ्यः॥ १२॥**

अन्वष्टक्यादौ॥ १२॥

प्रसङ्गान्मानुषपित्र्यप्रक्षालनमुक्त्वा प्रकृतमाह—

**१४५. मेक्षणेन प्रदक्षिणमुदायुवन्[1] श्रपयेत्॥ १३॥**

मेक्षणेन इध्मजातीयदारुनिर्मितदर्व्या प्रदक्षिणं यथा भवति तथोदायुवन् ऊर्ध्वं मिश्रयन् पाकवैषम्यनिवृत्त्यर्थं, श्रपयेत् पचेन्निरुप्तं हविः॥ १३॥

1. उदायुवं—क ख घ ङ च छ ज।

**१४६. शृतमभिघार्योदगुद्वास्य प्रत्यभिघारयेत् ॥ १४ ॥**

शृतं चरुं पवित्रवन्तमाज्येन स्रुवेण अभिघार्य उदग् अग्नेरुत्तरत उद्वास्य निधाय पुनरप्यभिघारयेत् ॥ १४ ॥

**१४७. सर्वाण्येवं हवींषि बर्हिष्यासाद्य* ॥ १५ ॥**

देवदेवत्यानि होमद्रव्याणि हवींषि। तानि सर्वाणि ओदनापूपशाकपायसादीनि एवं उक्तप्रकारेण तत्तत्कर्मण्यग्नेरुत्तरतः कुशोपरि निधाय। पितृदेवत्यस्य द्रव्यस्य (कव्यस्य) दक्षिणतो निधानस्य वक्ष्यमाणत्वात् (४४६) हवींषीत्युक्तम। हवींषीति स्रुवादीनामपि होमाङ्गानामुपलक्षणम् ॥ १५ ॥

अथ पूर्वोक्तपरिस्तरणादिविरूपाक्षजपान्तं कृत्वा अग्नेरुत्तरतः सादितमाज्यं चरुं च अग्नेः पश्चिमतः पूर्वमाज्यं तस्य पश्चिमतः चरुं च—'पूर्वमाज्यमपरः स्थालीपाकः' (१-८-१) इति गोभिल-वचनात्—दर्भेषु निधाय,

**१४८. आज्यभागौ जुहुयाच्चतुर्गृहीतमाज्यं गृहीत्वा पश्चा-वत्तं भृगूणां जामदग्न्यानामग्नये स्वाहेत्युत्तरत-स्सोमायेति दक्षिणतः ॥ १६ ॥**

चतुर्वारं स्रुवेण स्रुचि आज्यं गृहीत्वा स्रुचा अग्नावुत्तरभागे 'अग्नये स्वाहा' इति पूर्वं जुहुयात्। अनन्तरं दक्षिणभागे 'सोमाय स्वाहा' इति। भृगूणां जामदग्न्यानां तु पञ्चवारमाज्य-ग्रहणम्। अवदानधर्मकचरुतन्त्रेष्विदमेव पूर्वाङ्गम्। न व्याहृति-

१४५, १४६. सूत्रयोर्मध्ये 'यद्यत्र उल्बणं क्रियते तदापो निनयेद्यद्यो-रोऽत्रसेति' इति सूत्रमधिकम् घे। * साद्य—क ख घ ङ च छ ज

होमः। तथा च गोभिलः 'आज्यभागावेव प्रथमौ जुहुयात्' (१-८-४) इति ॥ १६ ॥

**१४९. विपरीतमितरे ॥ १७ ॥**

इतरे केचन शाखिनो दक्षिणतस्सोमायेति पूर्वमनन्तरममय इत्युत्तरतो होमं कुर्वन्ति। न आचार्यसम्मतोऽयं पक्षः 'इतरे' शब्दात ॥ १७ ॥

**१५०. आज्यमुपस्तीर्य हविषोऽवद्येन्मेक्षणेन मध्यात्पुरस्तादिति ॥ १८ ॥**

स्रुवेण स्रुच्युपस्तीर्य हविषो मध्यात्पुरस्ताच्च मेक्षणेनावद्येत्। अङ्गुष्ठपर्वमात्रं अवखण्ड्य पाणिना आदाय स्रुचि निदध्यात् ॥

**१५१. पश्चाच्च पञ्चावत्ती ॥ १९ ॥**

भृगवो जामदग्न्याः पश्चाच्चावद्येयुः ॥ १९ ॥

**१५२. अभिघार्य प्रत्यनक्त्यवदानस्थानानि ॥ २० ॥**

अवत्तं हविरभिघार्यावदानस्थानानि प्रत्यनक्ति शिष्टस्य हविषोऽयातयामतायै। एवं चत्वार्यवदानानि सिद्ध्यन्ति सकृदुपस्तरणं द्विर्हविषोऽवदानं पुनस्सकृदभिघारणमिति। भृगूणां तु पश्चादवदानस्याधिक्यात्पञ्चावदानानि सिद्ध्यन्ति ॥ २० ॥

**१५३. न स्विष्टकृतः ॥ २१ ॥**

स्विष्टकृदवदानानन्तरं न प्रत्यञ्जनम् ॥ २१ ॥

**१५४. अमुष्मै स्वाहेति जुहुयाद्यद्देवत्यं स्यात् ॥ २२ ॥**

क्रियमाणं कर्म यद्देवत्यं स्यात् तस्मै स्वाहेति जुहुयात्। अग्नये स्वाहेतिवत् ॥ २२ ॥

**१५५. स्विष्टकृतस्सकृदुपस्तीर्य द्विर्भृगूणां सकृद्धविषो द्विरभिघार्याग्नये स्विष्टकृते स्वाहेति प्रागुदीच्यां जुहुयात् ॥ २३ ॥**

अभिघारणद्वयं चतुरवदानसिद्ध्यर्थम्। भृगूणां तूपस्तरण आधिक्यं पञ्चावत्तित्वसिद्ध्यर्थम्। अवदानमुत्तरपूर्वकोणात्, उत्तरार्द्धपूर्वार्द्धात् ··· (१-८-१७) इति गोभिलवचनात् ॥

**१५६. समिधमाधाय ॥ २४ ॥**

इन्धनार्थां समिधमाधायाग्नौ निधायानुपर्युक्षेदित्यध्याहारः। अनुपर्युक्षणमुक्तं नित्यहोमप्रकरणे (१०९)। गोभिलश्च 'समिधमाधायानुपर्युक्ष्य यज्ञवास्तु करोति' (१-८-२५) इति।

समिल्लक्षणं चोक्तं कर्मप्रदीपे —

"नाङ्गुष्ठादधिका ग्राह्या समित् स्थूलतया क्वचित्।
न वियुक्ता त्वचा चैव न सकीटा न पाटिता ॥

प्रादेशान्नाधिका नोना न तथा स्याद् द्विशाखिका।
न सपर्णा न निर्वीर्या होमेषु च विजानता ॥" इति ॥

होमयोग्यास्समिधः स्मृत्यर्थसारे —

"पालाशखादिराश्वत्थशम्युदुम्बरजा समित्।
अपामार्गार्कदूर्वाश्च कुशाश्चेत्यपरे विदुः ॥" इति ॥

१५७. दर्भानाज्ये हविषि वा त्रिरवधायाग्रमध्यमूलान्यक्तं रिहाणा [1]वियन्तु वय इत्यभ्युक्ष्याग्नावनुप्रहरेद् [2]यः पशूनामधिपती रुद्रस्तान्तिचरो वृषा पशूनस्माकं मा हिंसीरेतदस्तु हुतं तव स्वाहेति ॥ २५ ॥

दर्भान् स्तृतभिन्नान्। तथा च गृह्यासङ्ग्रहः—

"स्तृतेभ्यो न प्रचिन्वीयात् यातयामं स्तृतं स्मृतम्।
स्तृतशेषात्ततो गृह्य यज्ञवास्तुक्रिया तथा ॥"

इति। प्रत्यवधानं मन्त्रावृत्तिः 'कर्मावृत्तौ तु मन्त्रस्याप्यावृत्तिर्गृह्यकर्मणि' इति न्यायात् ॥ २५ ॥

१५८. तद्यज्ञवास्तु ॥ २६ ॥

पूर्वोक्तो दर्भहोमो यज्ञवास्तुसंज्ञः। अथात्र पूर्णाहुतिं कुर्यात्। तथा च शौनकः—

"अथ पूर्णाहुतिं दद्याद्गन्धपुष्पफलान्विताम्।
साक्षतामूर्ध्वकायस्थस्समपाच्छकादिङ्मुखः ॥" इति।

वसुभ्यस्स्वाहेति मन्त्रेण गोभिलीयाः, शबलि समुद्रोसि इत्यादिना मन्त्रेण दाक्षिणात्याश्छन्दोगाश्च कुर्वन्ति ॥ २६ ॥

१५९. सर्वत्र कुर्यात् ॥ २७ ॥

इध्मवत्सु सर्वेषु होमेषु उपरिष्टाद्व्याहृतिहोमप्रायश्चित्तहोमयोरनन्तरं समिदाधानमनुपर्युक्षणं यज्ञवास्तु इत्येतत्कुर्यात्।

1. व्यन्तु—ख ङ ट ठ। 2. यः पशूनामिति–घ।

ब्रह्मोद्वासनानन्तरं वामदेव्यं गायेत 'अप्रवृत्ते कर्मणि वामदेव्य-गानं शान्त्यर्थं शान्त्यर्थम्' (१-९-२५) इति गोभिलवचनात् ॥

ब्रह्मणे दातव्यमाह—

१६०. हविरुच्छिष्टमुदगुद्वास्य ब्रह्मणे दद्यात् ॥ २८ ॥

होमार्थं स्वपुरतः स्थापितस्य स्थालीपाकस्य उच्छिष्टं अवशेषमुदगग्नेरुद्वास्य तस्य हविषः किंचिदन्यस्मिन् पात्रे निधाय ब्रह्मणे दद्यात् । ततोऽवशिष्टहविषः किंचित्स्वयं भक्षयेत ॥ २८ ॥

१६१. पूर्णपात्रं दक्षिणा ॥ २९ ॥

भोजनपर्याप्तौदनतण्डुलफलान्यतमपूर्णं पात्रं दक्षिणा ब्रह्मणः ॥ २९ ॥

१६२. यथोत्साहं वा ॥ ३० ॥

दातुरुत्साहश्चेत् पूर्णपात्रोपर्यपि गोवस्त्रहिरण्यादिकं दद्यात् । न तु पूर्णपात्रन्यूना दक्षिणा देया । 'पूर्णपात्रोऽवमः पाकयज्ञानां दक्षिणा । अपरिमितं परार्ध्यम् ।' (१-९-९, १०) इति गोभिलः । ततः ब्रह्मणः उद्वासनम् ॥ ३० ॥

इति द्वितीये पटले प्रथमः खण्डः ॥



१६३. आग्नेयस्थालीपाकोऽनाहिताग्नेर्दर्शपूर्णमासयोः ॥

अनाहिताग्नेर्दर्शपूर्णमासयोः स्थालीपाक आग्नेयः अग्नि-देवताकः। अग्नये निर्वापहोमौ कर्तव्यौ ॥ १ ॥

१६४. अग्नीषोमीयः पौर्णमास्यामाहिताग्नेः ॥ २ ॥

आहिताग्नेस्तु पौर्णमास्यामग्नीषोमदेवताकः। अग्नीषोमाभ्यां निर्वापहोमौ ॥ २ ॥

१६५. ऐन्द्रो माहेन्द्रो वैन्द्राग्नो वामावास्यायाम् ॥ ३ ॥

तस्यैवामावास्यायां इन्द्रदेवताको वा महेन्द्रदेवताको वा इन्द्राग्निदेवताको वा स्थालीपाकः। एष विनिवेशविकल्पः। असोमयाजिन ऐन्द्राग्नः, एकेनेष्टवत ऐन्द्रः, बहुयाजिनो माहेन्द्र इति ॥ ३ ॥

१६६. यथा वानाहिताग्नेः ॥ ४ ॥

अथवा एकाग्नेरिव त्रेताग्नेरप्याग्नेय एव ॥ ४ ॥

गौणकालमाह—

१६७. सर्वमहः प्रातराहुतेस्स्थानम् ॥ ५ ॥

स्पष्टम् ॥ ५ ॥

१६८. रात्रिस्सायमाहुतेः ॥ ६ ॥

स्पष्टम् ॥ ६ ॥

१६९. सर्वोऽपरपक्षः पौर्णमासस्य ॥ ७ ॥

कृष्णप्रतिपदमारभ्यामावास्यापर्यन्तं पौर्णमासस्य कालः ॥

१७०. पूर्वपक्षो दार्शस्य ॥ ८ ॥

सर्वश्शुक्लपक्षो दार्शस्य कालः । उक्तगौणकालेऽपि द्रव्यालाभादिहेतोः सायंप्रातर्होमाकरणेन व्रतलोपे स्मृत्युक्तप्रायश्चित्तेन तत्परिहारं मन्यत आचार्यः । वक्ष्यति चोत्तरत्र 'प्रायश्चित्तमहुतस्य' (१७६) इति ॥ ८ ॥

अत्रैकेषां मतमाह—

१७१. अभोजनेन संतनुयादित्येके ॥ ९ ॥

द्रव्यालाभाद्धोमाकरणे द्रव्यलाभपर्यन्तमभोजनेन—प्रायश्चित्तान्तरं विनैव— व्रतसान्तत्यं मन्यन्ते । किन्तु, द्रव्यलाभे सति प्रागहुता अग्निदेवता आहुतीर्गणयित्वा पात्रे कृत्वा सकृदेवाग्नये स्वाहेति जुहुयात् । एवमेव सूर्यदेवतास्सूर्याय स्वाहेति प्राजापत्याश्च तूष्णीम् । अयं च होमस्सायंकाले कर्तव्यः । 'सायमाहुत्युपक्रमं परिचरणं' (९८) इति कर्मणस्सायमारम्भकत्वस्योक्तत्वात् । तथा च कर्मप्रदीपः—

"अहूयमानेऽनश्नंश्चेन्नयेत्कालं समाहितः ।
संपन्ने तु यथा तत्र हूयते तदिहोच्यते ॥

अहुताः परिसङ्ख्याय पात्रे कृत्वा आहुतीस्सकृत ।
मन्त्रेण विधिवद्धुत्वा एवमेवापरा अपि ॥"

इति । गोभिलोऽप्यस्मिन् प्रकरणे 'अहुतस्य प्रायश्चित्तं भवतीति । नाव्रतो ब्राह्मणस्स्यादिति' (१-९-१७-१८) इत्युक्त्वा

वदति 'अथाप्युदाहरन्ति। यावन्न हूयेताभोजनेनैव तावत्सन्तनुयात्। अथ यदाधिगच्छेत प्रति जुहुयात्। एवमप्यस्य व्रतं सन्ततं भवतीति' (१-९-१९) इति ॥ ९ ॥

**१७२. अविद्यमाने हव्ये यज्ञियानां फलानि जुहुयात् ॥**

हविष्येषु तण्डुलादिष्वविद्यमानेषु यज्ञियानां उदुम्बरादीनां फलानि जुहुयात्। औपासने कृतान्यकृतानि वा। स्थालीपाके तु स्थालीपाकधर्मेण पक्वान्येव ॥ १० ॥

**१७३. पलाशानि वा ॥ ११ ॥**

पत्राणि वा। इतरत्पूर्ववत् ॥ ११ ॥

**१७४. अपो वा ॥ १२ ॥**

सर्वाभावे जलं जुहुयात् ॥ १२ ॥

**१७५. हुतं हि ॥ १३ ॥**

हि यस्मादेवं जलेनापि हुते हुतं भवत्यतो व्रतस्य लोपो न भवतीत्यर्थः। अयं जलहोमपक्ष ऐडाभिप्रेतः। 'अप्यप एवान्ततो जुहुयादिति ह स्माह पाकयज्ञ ऐडो हुतं ह्येव' (१-९-१६) इति गोभिलवचनात् ॥ १३ ॥

**१७६. प्रायश्चित्तमहुतस्य ॥ १४ ॥**

गौणकालेऽपि गौणद्रव्येणापि होमेऽकृते प्रायश्चित्तं भवति। प्रायश्चित्तं च—

"होमद्वयात्यये दर्शपूर्णमासात्यये तथा ।
पुनरेवाग्निमादध्यादिति भार्गवशासनं ॥" इत्युक्तम् ।

पुनराधानप्रयोगश्च छन्दोगपरिशिष्ट उक्तः —
"पूर्वैव योनिः पूर्वावृत्पुनराधानकर्मणि ।
विशेषोऽत्राग्न्युपस्थानमाज्याहुत्यष्टकं तथा ॥

कृत्वा व्याहृतिहोमान्तमुपतिष्ठेत पावकम् ।
अध्यायः केवलाग्नेयः कस्ते जामिरमानसः ॥

अग्निमीडेऽग्न आयाहि ह्यग्न आयाहि वीतये ।
तिस्रोऽग्निर्ज्योतिरित्यग्निन्दूतमग्ने मृडेति च ॥

इत्यष्टावाहुतीर्हुत्वा यथाविध्यनुपूर्वशः ।
पूर्णाहुत्यादिकं सर्वमन्यत्पूर्ववदाचरेत् ॥ इति ॥"

आधाने अग्निसम्पादनप्रकारः प्रथमतो गृह्याग्निसंपादनप्रकारवत् । पुरस्ताद् व्याहृतिहोमान्तं कृत्वा 'कस्ते जामिः' इत्यारभ्य केवलाग्नेयनामकमध्यायं ऋगात्मकं वाचा स्पष्टमुच्चारयन् न मनसा केवलं ध्यायन् - अग्निमुपतिष्ठेत । ततः 'अग्निमीडे' 'अग्न आयाह्यग्निभिः' 'अग्न आयाहि वीतये' 'अग्निर्ज्योतिः' 'पुनरूर्जा' 'सह रय्या' 'अग्निं दूतं' 'अग्ने मृड' इत्यादिभिरष्टभिः ऋग्भिराज्यं जुहुयात् । पूर्णाहुतिं कृत्वा व्याहृतिहोमाद्युपरिष्टात्तन्त्रं कुर्यात् । चतुर्गृहीतमाज्यं गृहीत्वा क्रियमाणः प्रजापतिदेवताको होमः पूर्णाहुतिः ॥

भार्गवकथितेभ्योऽर्वाचीनेषु निमित्तेषु व्यस्ताभिस्समस्ताभिश्च व्याहृतिभिः प्राजापत्यया वा प्रायश्चित्तहोमः ॥

१७७. आज्यं जुहुयाद्धविषोऽनादेशे ॥ १५ ॥

लाजापूपादिहविष्यद्रव्यानादेशे आज्यमेव जुहुयात् ॥

१७८. देवता मन्त्रानादेशे ॥ १६ ॥

देवतायामुक्तायां 'ऐन्द्रः' 'ऐन्द्राग्नः' (१६५) इत्यादिवद्, होममन्त्रे चानुक्ते देवतानामैव चतुर्थ्यन्तं स्वाहान्तं च मन्त्रं विद्यादग्नये स्वाहेतिवत् ॥

अथ पुंसवनम् ।

अत्र प्रसङ्गान्नान्दीश्राद्धं निरूप्यते । नान्दीश्राद्धयुतानि खलु सकलशुभकर्माणि । तदुक्तं बह्वृचकारिकायाम् —

"स्यादाभ्युदयिकं श्राद्धं वृद्धिपूर्तेषु कर्मसु ।
पुंसस्सवनसीमन्तचौलोपनयनेष्विह ॥

विवाहे चानलाधेयप्रभृतिश्रौतकर्मणि ।
इदं श्राद्धं प्रकुर्वन्ति द्विजा वृद्धिनिमित्तकम् ॥" इति ॥

पुंसवने पूर्वं मातृकापूजनपूर्वकं नान्दीश्राद्धं कर्तव्यम् । मातृकापूजनस्य अवश्यकर्तव्यतायां कात्यायनः—

"कर्मादिषु तु सर्वेषु मातरस्सगणाधिपाः ।
पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥" इति ।

शातातपश्च —

"अकृत्वा मातृयागं तु यश्श्राद्धं परिवेषयेत ।
तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः ॥" इति ।

मातृपूजने पूज्या देवताः पूजनप्रकारश्च कर्मप्रदीपे—

"गौरी पद्मा शची मेधा सावित्री विजया जया।
देवसेना स्वधा स्वाहा मातरो लोकमातरः॥

धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह।
गणेशेनाधिका ह्येता वृद्धौ पूज्याश्चतुर्दश॥

प्रतिमासु च शुभ्रासु लिखिता वा पटादिषु।
अपि वाक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः॥" इति।

प्रतिमासु चित्रेषु अक्षतपुञ्जेषु वा उक्ता देवता आवाह्य पूजयेत्। आवाहनादिपूजने 'ओं भूर्भुवस्स्वः' इति मन्त्रं पठन्ति। ततः कुड्ये सप्त वारान् पञ्च वारान् वा घृतधारां 'वसोर्धारा' नाम्नीं प्रागपवर्गामुदगपवर्गां वा दद्यात्। 'एतमुत्यं' इत्यादि साम धारादाने मन्त्रं पठन्ति। ततोऽरिष्टवर्गं गायेत्।

अत्र कर्मप्रदीपः—

"कुड्यलग्नां वसोर्धारां सप्त वारान् घृतेन तु।
कारयेत्पञ्च वारान् वा नातिनीचां न चोच्छ्रिताम्॥

आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः।" इति।

प्रसिद्धात्पार्वणश्राद्धान्नान्दीश्राद्धे वर्तमानं विशेषमात्रमत्र वक्ष्यामः साकल्येन नान्दीश्राद्धनिरूपणे विस्तरशङ्कया। अत्र गोभिलीयश्राद्धकल्पसूत्राणि—

'अथाभ्युदयिके श्राद्धे । युग्मानाशयेत् । प्रदक्षिणमुपचारः । ऋजवो दर्भाः । यवैस्तिलार्थः । संपन्नमिति तृप्तिप्रश्नः । दधिबदराक्षतमिश्राः पिण्डाः । नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यदाने । दैवे वाचयित्वा पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यस्स्वाहोच्यताम् । न स्वधां प्रयुञ्जीत ।' इति ।

अत्र विश्वे देवाः सत्यवसुनामानः । विश्वदेववरणानन्तरं मातृवर्गस्य पृथग्वरणं कर्तव्यमेव । तथा च स्मृत्यन्तरम् —

"अष्टकासु च वृद्धौ च गयायां च महालये ।
चन्द्रसूर्योपरागे च व्यतीपाते मृतेऽहनि ॥

मातृश्राद्धं पृथक् कुर्यादन्यत्र पतिना सह ॥" इति ॥

अग्नौकरणहोमे 'स्वाहा सोमाय पितृमते' 'स्वाहा अग्नये कव्यवाहनाय' इत्येव मन्त्रौ । विशेषाकथनात् चन्द्रिकायां पार्वणश्राद्धवदेव मन्त्रविधानाच्च ।

कात्यायनोऽप्येवमेवाह —

"अतः परं प्रवक्ष्यामि विशेष इह यो भवेत् ।
प्रातरामन्त्रितान् विप्रान् युग्मानुभयतस्तथा ॥

उपवेश्य कुशान् दद्यादृजुनैव हि पाणिना ।
निपातो न हि सव्यस्य जानुनो विद्यते क्वचित् ॥

सदा परिचरेद्भक्त्या पितॄनप्यत्र देववत् ।
पितृभ्य इति दत्तेषु उपवेश्य कुशेषु तान् ॥

गोत्रनामभिरामन्त्र्य पितृनर्घ्यं प्रदापयेत् ।
नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते ॥

पात्राणां पूरणादीनि दैवेनैव हि कारयेत् ।
ज्येष्ठोत्तरकरान् युग्मान् कराग्राग्रपवित्रकान् ॥

कृत्वार्घ्यं संप्रदातव्यं नैकैकस्यात्र दीयते ।
न चाश्नत्सु जपेदत्र कदाचित् पितृसंहिताम् ॥

अन्य एव जपः कार्यस्सोमसामादिकश्शुभः ।
यस्तत्र प्रकरोऽन्नस्य तिलवद्यवत्तथा ॥

उच्छिष्टसन्निधौ सोऽत्र तृप्तेषु विपरीतकः ।
संपन्नमिति 'तृप्ताः स्थ' प्रश्नस्थाने विधीयते ॥

सुसंपन्नमिति प्रोक्ते शेषमन्नं निवेदयेत् ।
प्रागग्रेष्वथ दर्भेषु आद्यमामन्त्र्य पूर्ववत् ॥

अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति निस्तिलाः ।
द्वितीयं च तृतीयं च मध्यदेशाग्रदेशयोः ॥

मातामहप्रभृतींस्तु तेषामेव हि वामतः ।
सर्वस्मादन्नमुद्धृत्य व्यञ्जनैरुपसिच्य च ॥

संयोज्य यवकर्कन्धूदधिभिः प्राङ्मुखस्तथा ।
अवनेजनवत्पिण्डान् दत्वा बिल्वप्रमाणकान् ।
तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेत् ॥" इति ॥

(उभयतः—देवपक्षे पितृपक्षे च। ज्येष्ठोत्तरकरानिति—द्वौ हि ब्राह्मणावामन्त्र्येते। तौ तथा अवतिष्ठेयातां यथा पश्चादुपवेशितस्य दक्षिणकरोपरि पूर्वोपवेशितस्य दक्षिणकरो भवेत्। किं च करोपरि निहितस्य पवित्रस्याग्रं कराग्रवर्ति भवेत्। एवं च मिलितहस्त एव अर्घ्यं देयम्। सोमसामादिकः—सोमसामानि आयुष्यसूक्तं च। विपरीतकः—संपन्नमिति तृप्तिप्रश्नात् पूर्वं कार्यः। आद्यं—पितरम्। पूर्ववत्—अर्घ्यदानवत्)

प्रथमं मातृवर्गस्य पिण्डा देयाः। तदुत्तरतः पितृवर्गस्य तदुत्तरतो मातामहवर्गस्य॥

नान्दीश्राद्धमिदं वैश्वदेवं कृत्वा कार्यम्॥ १६॥

१७९. प्रथमगर्भे तृतीये मासि पुंसवनम्॥ १७॥

सोऽयं पुंसवननामा संस्कारो ब्राह्मणानामाधारसंस्कारद्वाराधेयस्य सिद्ध्यति। स च गर्भमासमारभ्य तृतीये मासि कर्तव्यः। गर्भस्याव्यक्तलिङ्गत्वस्यापेक्षितत्वात्। पुमान् सूयते अनेन कर्मणेति पुंसवनशब्दव्युत्पत्तेः, पुंसवनेन पुंसीकरोतीति श्रवणाच्च। नहि व्यक्तलिङ्गो गर्भोऽन्यथा कर्तुं शक्यः॥ १७॥

अयं च संस्कारो नाभ्यभिमर्शनशुङ्गासेचनरूपकर्मद्वयात्मकः। आदौ नाभ्यभिमर्शनं व्याख्यायते—

१८०. स्नातामहतेनाच्छाद्य हुत्वा पतिः पृष्ठतस्तिष्ठेत्॥

स्नातां (५४) वधूं नूतनवस्त्रं धारयित्वा तां दक्षिणत उपवेश्य गृह्याग्निमुपसमाधाय पुरस्तादङ्गव्याहृतित्रयहोमान्तं कृत्वा पतिस्तस्याः पृष्ठतस्तिष्ठेत्॥ १८॥

१८१. दक्षिणमंसमन्ववमृश्यानन्तर्हितं नाभिदेशमभिमृशेत्पुमांसाविति ॥ १९ ॥

पतिर्वध्वा दक्षिणमंसमन्ववमृश्य वस्त्रादिनानन्तर्हितं तस्या नाभिदेशमभिमृशेत् 'पुमांसौ' इत्यादिना मन्त्रेण । अथ व्याहृतिहोमादिकमुपरिष्टात्तन्त्रं समापयेत् ॥ १९ ॥

१८२. अथापरम् ॥ २० ॥

पुंसवने द्वितीयं कर्मेत्यर्थः ॥ २० ॥

१८३. न्यग्रोधशुङ्गां उभयतःफलामस्रामामक्रिमिपरिसृप्तां त्रिस्सप्तैर्यवैः परिक्रीयोत्थापयेन्माषैर्वा सर्वत्रौषधयस्सुमनसो भूत्वास्यां वीर्यं समाधत्तेयं कर्म करिष्यतीति ॥ २१ ॥

वटस्य शुङ्गां मुकुलितपल्लवरूपामुक्तगुणयुक्तामुत्थापयेद् गृह्णीयात् । किं कृत्वा ? त्रिः सप्तैरेकविंशत्या यवैः यवाभावे माषैस्सर्वत्रेत्यादिना मन्त्रेण परिक्रीय । परिक्रयणं च माषयवरूपमूल्यद्रव्यं वृक्षमूले निधाय शुङ्गायास्स्वीकरणम् । तत्प्रकारश्च गोभिलेनोक्तः—'यद्यसि सौमी सोमाय त्वा राज्ञे परिक्रीणामि, यद्यसि वारुणी वरुणाय त्वा राज्ञे परिक्रीणामि, यद्यसि वसुभ्यो वसुभ्यस्त्वा परिक्रीणामि, यद्यसि रुद्रेभ्यो रुद्रेभ्यस्त्वा परिक्रीणामि, यद्यस्यादित्येभ्य आदित्येभ्यस्त्वा परिक्रीणामि, यद्यसि मरुद्भ्यो मरुद्भ्यस्त्वा परिक्रीणामि, यद्यसि विश्वेभ्यो देवेभ्यो विश्वेभ्यो देवेभ्यस्त्वा परिक्रीणामि ।' (२-६-७) इति ।

अत्र यद्यसीत्यादिभिस्सप्तभिर्मन्त्रैः क्रयलिङ्गैस्त्रींस्त्रीन्

यवान् माषान् वा वृक्षमूले निक्षिप्य परिक्रयणमिति पद्धति-कृतः ॥ २१ ॥

**१८४. आहृत्य वैहायसीं कुर्यात् ॥ २२ ॥**

तां शुङ्गामाहृत्यानाच्छादिते देशे निदध्यात् ॥ २२ ॥

**१८५. कुमारी ब्रह्मचारी[1] व्रतवती वा ब्राह्मणी पेषये-दप्रत्याहरन्ती ॥ २३ ॥**

ब्राह्मणी कुमारी, ब्राह्मणो ब्रह्मचारी, ब्राह्मणी वा पति-व्रता —'पतिव्रता व्रतवती' इति कर्मप्रदीपः— दृषदि शुङ्गां स्थापयित्वा पिंषेत्। कथम्? पिष्टस्य प्रत्यानयनमकुर्वती ॥२३॥

**१८६. स्नातां संवेश्य[2] दक्षिणे नासिकास्रोतस्यासिञ्चेत्पुमा-नग्निरिति ॥ २४ ॥**

पुनस्स्नातां वधूं प्राक्शिरसं दर्भेषु उदगग्रेषु शाययित्वा तस्या दक्षिणे नासारन्ध्रे शुङ्गारसं दक्षिणाङ्गुष्ठोपकनिष्ठिकेन— 'दक्षिणस्य पाणेरङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुलया' (२-६-१०) इति गोभिलवचनात् — आसिञ्चेत् 'पुमानग्निः' इत्यादिना मन्त्रेण ॥ २४ ॥

**१८७. अथास्याश्चतुर्थे मासि षष्ठे वा सीमन्तोन्नयनम् ॥**

अथेति कर्मभेदानन्तर्ययोर्ज्ञापनार्थम्। अस्याः पुंसवनेन संस्कृतायाः। सीमन्तः केशसन्निवेशविशेषः तस्य रचनं ललाट-मारभ्योर्ध्वं क्रियमाणत्वात् सीमन्तोन्नयनमुच्यते ॥ २५ ॥

---

1. ब्रह्मचारिणी—घ। 2. समावेश्य—ग।

१८८. स्नातामहतेनाच्छाद्य हुत्वा पतिः पृष्ठतस्तिष्ठन्ननु-पूर्वया फलवृक्षशाखया सकृत्सीमन्तमुन्नयेत् [1]त्रि-श्वेतया च शलल्यायमूर्जावतो वृक्ष इति ॥ २६ ॥

गृह्याग्निमुपसमाधाय अङ्गाहुत्यन्तं कृत्वा वध्वाः पृष्ठत-स्तिष्ठन् पतिः अनुपूर्वया पूर्वोक्तगुञ्जावदुभयतःफलया अक्रिमि-परिसृप्तया औदुम्बरशाखया—मन्त्रलिङ्गात्—त्रिषु स्थानेषु श्वेतया शलल्या श्वावित्कण्टकेन च सकृत् सकृत् सीमन्त-मुन्नयेत् ।

यद्यपि 'अयमूर्जावतो वृक्षः' इत्यादेरेकस्यैव मन्त्रस्य विनियोगस्सूत्रितस्तथापि लिङ्गात्सूत्रान्तराच्च परेषां त्रयाणामपि मन्त्राणां सीमन्तोन्नयने विनियोगोऽवगम्यते 'परिधत्त' इत्यादे-र्मन्त्रस्येव (५४) ।

'अयमूर्जावतः' इत्यादिभिश्चतुर्भिर्मन्त्रैः सकृत् शाखया, पुनश्च तैरेव सकृत् शलल्या सीमन्तमुन्नयेदित्ययं स्वरसलभ्य-स्सूत्रार्थः ।

आचारस्तु 'अयमूर्जावतः' 'येनादितेः' इत्यादिभ्यां मन्त्राभ्यां सकृच्छाखया सीमन्तोन्नयनं 'राकामहं' 'यास्ते राके' इत्यादिभ्यां शलल्या सकृत् सीमन्तोन्नयनमित्येवं वर्तते ।

अत्र समीचीनपक्षनिर्णये शिष्टाः प्रमाणम् ॥ २६ ॥

१८९. [2]कृसरस्थालीपाकमुत्तरघृतमवेक्षतीं पृच्छेत् किं पश्य-सीति ॥ २७ ॥

---

1. त्रिश्श्वेतया-क । त्रिः श्वेतया—ख झ ट । 2. कृसरः स्थालीपाकः । उत्तरघृतं..." पश्यसीति । क ख घ ङ च छ ज झ ट ठ ड

'तिलतण्डुलसंपक्वः कृसरस्सोऽभिधीयते' इति कर्मप्रदीपवचनात्तिलमिश्राणां तण्डुलानां स्थालीपाकः कृसरस्थालीपाकः। मानुषत्वात् द्विः प्रक्षाळ्य होमेऽनुपयुज्यमानत्वान्निर्वापादिधर्मवर्जं लौकिकाग्नौ स्थाल्यां श्रपितं उपरिदेशस्थघृतयुक्तं कृसरं पश्यन्तीं वधूं पृच्छेत् पतिः 'किं पश्यसि' इति ॥ २७ ॥

१९० प्रजामिति वाचयेत् ॥ २८ ॥

स एव भार्यां 'प्रजां' इत्यादिं मन्त्रं वाचयेत्। तं स्थालीपाकं सा भुञ्जीत 'तं सा स्वयं भुञ्जीत' (२-७-११) इति गोभिलोक्तेः। अविधवाः पुत्रवत्यो ब्राह्मण्यश्च तामनुनयेयुः 'वीरसूर्जीवसूर्जीवपत्नी त्वं भव' इति, गोभिलवचनात्। ततः तन्त्रसमापनम ॥

एते गर्भाधानादिसीमन्तान्तास्संस्कारास्सकृदेव; न प्रतिगर्भम् आधारसंस्कारेणैव प्रतिगर्भं संस्कारासिद्धेः। केचित् पुनः पुत्रकामस्य प्रतिगर्भं पुंसवनमिच्छन्ति ॥

पुंसवनादयः चौलान्तास्संस्कारा यथोक्तकालातिपाते सर्वप्रायश्चित्तं—व्यस्ताभिर्व्याहृतिभिस्समस्ताभिश्च—हुत्वा कर्तव्याः। तथा च कात्यायनः—

"देवतानां विपर्यासे जुहोतिषु कथं भवेत्।
सर्वप्रायश्चित्तं हुत्वा क्रमेण जुहुयात्पुनः ॥

संस्कारा अतिपत्येरन् स्वकालाच्चेत् कथंचन।
हुत्वैतदेव कर्तव्या ये तूपनयनादधः ॥" इति ॥

उपनयने तु व्रात्यस्तोमाख्यं प्रायश्चित्तं स्मृत्यन्तरे विधीयते।

यद्यकृतसीमन्तोन्नयना प्रसूयते तदा कर्तव्यमाह सत्यव्रतः—

"स्त्री यदा अकृतसीमन्ता प्रसूयेत कथंचन।
गृहीतपुत्रा विधिवत् पुनस्संस्कारमर्हति ॥" इति।

यदि पुंसवनमपि पूर्वं न कृतं तदा तदपि सीमन्तोन्नयनात् पूर्वं कर्तव्यमेव — 'पुंसुवं प्राग्विनिर्वर्त्य ततस्सीमन्तमुन्नयेत्' इति धर्मोद्योतवचनात्।

यदि पुंसवनसीमन्तोन्नयनयोः करणात् पूर्वं गर्भस्रावः, प्रसवेऽपि जातस्य मृतिः तदा द्वितीयगर्भोत्पत्तावेते यथाकालं कार्ये। तथा च स्मृतिः—

"पूर्वश्च स्रावितो यश्च गर्भो यश्चाप्यसंस्कृतः।
द्वितीये गर्भसंस्कारस्तेन शुद्धिर्विधीयते ॥" इति ॥

सोष्यन्तीहोमस्य (१९१) अकरणे जातस्य प्रायश्चित्तेनैव संस्कारः न पुनः करणमिति रुद्रस्कन्दः ॥ २८ ॥

अथ सोष्यन्तीहोमः ॥

## १९१. प्रतिष्ठिते बस्तौ सोष्यन्तीहोमः ॥ २९ ॥

बस्तिर्योनिद्वारं तस्मिन् प्रतिष्ठिते संलग्ने गर्भे इत्यध्याहारः। सोष्यन्तीहोमः कर्तव्य इति शेषः। वधूं सोष्यन्तीं ज्ञात्वा क्रियमाणस्सुखप्रसवार्थोऽयं होमः। अनेन गर्भश्च संस्क्रियते। अत एव गृह्याग्नावयं कर्तव्यः। तथा च कात्यायनः—

"न खेऽग्नावन्यहोमः स्यात् मुक्त्वैकां समिदाहुतिम्।
स्वगर्भसंस्क्रियार्थांश्च यावन्नासौ प्रजायते॥" इति।

'होमश्चायं परिचरणतन्त्रेण कर्तव्यः। किन्तु परिस्तरणाज्य-संस्कारौ भवतः' इति गोभिलमतम्। अवकाशौचित्यादविरोधाच्च तदेव युक्तं प्रतिभाति॥ २९॥

मन्त्रावाह—

१९२. या तिरश्चीति द्वाभ्याम्॥ ३०॥

'या तिरश्ची' 'विपश्चित्पुच्छम्' इत्यादिभ्यां द्वाभ्यां सोष्यन्तीहोमः इत्यनेनान्वयः। द्वे आहुती॥ ३०॥

१९३. असाविति नाम दध्यात्॥ ३१॥

द्वितीयमन्त्रे 'असौ' शब्दस्थाने देवदत्तशर्मेतिवन्नाम ब्रूयात्॥ ३१॥

१९४. तद् गुह्यम्॥ ३२॥

एवं उक्तं जनिष्यमाणस्य नाम गुह्यमेव। तेन नाम्ना स्वयमपि न व्यवहरेत्। एतदत्र कारणं रिपुणा ज्ञातमाभिचारे उपयुक्तं महतेऽनर्थाय स्यादिति॥ ३२॥

अथ जातकर्म॥

१९५. प्राङ्नाभिकृन्तनात्स्तनदानाच्च व्रीहियवौ पेषये-च्छुङ्गावृता॥ ३३॥

पुत्रोत्पत्तौ तन्निमित्तकानि स्नानाभ्युदयश्राद्धपुण्याहवाचनादीनि कृत्वा नाभिकृन्तनात् स्तनदानाच्च यथासंभवं प्राक्

वक्ष्यमाणं जातकर्म कर्तव्यम् । व्रीहियवौ मिलितावेव पेषयेत शुङ्गामिव (१८५) । व्रीहियवाविति जात्येकवचनमाश्रित्य द्विवचनम । व्रीहियवाभावे शालिगोधूमा ग्राह्याः 'यवानामिव गोधूमा व्रीहीणामिव शालयः' इति वचनात् ॥ ३३ ॥

**१९६. अङ्गुष्ठेनानामिकया चादाय कुमारं प्राशयेदिय-माज्ञेति ॥ ३४ ॥**

एवं पिष्टौ व्रीहियवौ कुमारस्य जिह्वायां लिम्पेद् 'इयमाज्ञा' इत्यादिना मन्त्रेण ॥ ३४ ॥

**१९७. सर्पिश्च मेधां त इति ॥ ३५ ॥**

'मेधां ते' इत्यादिना मन्त्रेण सर्पिः प्राशयेत पूर्वोक्त-प्रकारेण ।

अनन्तरं वामदेव्यं गायेत् । तथा च कर्मप्रदीपः—

"अहोमकेष्वपि भवेद्यथोक्तं चन्द्रदर्शने ।
वामदेव्यं गणेष्वन्ते बल्यन्ते वैश्वदेविके ॥" इति ।

ततो नाभिकृन्तनं कर्तव्यं स्तनदानं च ।

स्त्रीणां तु जातकर्मादिचौलान्तास्संस्काराः तत्तत्काले तूष्णीमेव कार्याः । तथा च मनुः—

"अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः ।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ॥" इति ।

नामधेयादिकर्मसु प्रधानस्यैव तूष्णीं करणं, अङ्ग-

होमाभ्युदयौ तु मन्त्रवन्ताविवेति गोभिलीयाः। अहोमका एव स्त्रीणां संस्कारा इति रुद्रस्कन्दः॥ ३५॥

इति द्वितीये पटले द्वितीयः खण्डः॥

---

अथ बहिर्निष्क्रमणम्॥

**१९८. जननाज्ज्योत्स्ने तृतीये तृतीयायां प्रातस्स्नाप्य कुमारमस्तमिते शान्तासु दिक्षु पिता चन्द्रमसमुपतिष्ठेत् प्राञ्जलिः॥ १॥**

ज्योत्स्ना अस्यास्तीति ज्योत्स्नश्शुक्लपक्षः। जननानन्तरं तृतीये शुक्लपक्षे-तृतीये चतुर्थे वा मासि-तृतीयायां तिथौ कुमारं प्रातस्स्नापयित्वा, अस्तमिते सूर्ये शान्तासु निर्मलासु दिक्षु चन्द्रं पश्चिमदिक्स्थं प्राञ्जलिः पश्चिमाभिमुखस्सन्नुपतिष्ठेद् उपतिष्ठेत स्तुवीत वक्ष्यमाणप्रकारेण॥ १॥

**१९९. शुचिनाच्छाद्य माता प्रयच्छेदुदक्छिरसम्॥**

कुमारं शुद्धवस्त्रेणाच्छाद्य पितुर्दक्षिणतः स्थिता माता कुमारमुदक्शिरसं पित्रे प्रयच्छेत्॥ २॥

**२००. अनुपूर्वं गत्वोत्तरतस्तिष्ठेत्॥ ३॥**

अनुपूर्वं पूर्वया दिशा पितुः पृष्ठतो गत्वोत्तरतो माता तिष्ठेत्।

**२०१. यत्ते सुसीम इति तिसृभिरुपस्थायोदञ्चं मात्रे प्रदाय यदद इत्यपामञ्जलिमवसिञ्चेत्॥ ४॥**

कुमारं हस्तयोरादाय 'यत्ते सुसीमे' 'यत्पृथिव्याः' 'इन्द्राग्नी' इत्यादिभिस्तिसृभिश्चन्द्रमसं स्तुत्वोदक्छिरसं कुमारं मात्रे प्रदायापामञ्जलिं चन्द्रप्रीत्यर्थं 'यददः' इत्यादिना मन्त्रेण सकृद् भूमाववसिञ्चेत् ॥ ४ ॥

**२०२. द्विस्तूष्णीम् ॥ ५ ॥**

अपामञ्जलिमवसिञ्चेदित्यनुवर्तते ।

बहिर्निष्क्रमणार्थमिदं कर्म कुमारस्य दीर्घायुष्यं भवति । नित्यप्रकरणपठितत्वादवश्यमनुष्ठेयञ्च ॥ ५ ॥

अथ नामकरणम् ॥

**२०३. जननादूर्ध्वं दशरात्राच्छतरात्रात्संवत्सराद्वा नाम कुर्यात् ॥ ६ ॥**

जननानन्तरभाविनो दशरात्रादूर्ध्वं जननदिवसमारभ्य एकादशेऽहनि नाम कुर्यात् । यदि अपररात्रे जननं तदा द्वादशे अहनि । एवमेवोत्तरयोरपि पक्षयोः । अत्र प्रमाणान्तराणि— 'अहन्येकादशे नाम' (याज्ञवल्क्यः) 'आशौचापगमे नामधेयम' (विष्णुः) 'एकादशे द्वादशे वाहनि पिता नाम कुर्यात्' (श्रुतिः) इति । प्रथमपक्षे असंभवे उत्तरपक्षाश्रयणम ॥ ६ ॥

**२०४. स्नाप्य कुमारं करिष्यत उपविष्टस्य शुचिनाच्छाद्य माता प्रयच्छेदुदक्छिरसम् ॥ ७ ॥**

उपविष्टस्य, करिष्यतः वैरूपाक्षजपानन्तरं नामकरणोन्मुखस्य पितुर्दक्षिणत उपविश्य माता स्नापितं कुमारं शुद्धवस्त्रेण

आच्छादितमुदक्शिरसं प्रयच्छेत्। अग्निरत्र लौकिकः। तथा च कर्मप्रदीपः—

"अग्निस्तु नामधेयादौ होमे सर्वत्र लौकिकः।
नहि पित्रा समानीतः पुत्रस्य भवति क्वचित्॥" इति॥

**२०५. अनुपृष्ठं गत्वोत्तरत उपविशेत्॥ ८॥**

पितुः पश्चिमतो गत्वोत्तरत उपविशेन्माता॥ ८॥

**२०६. हुत्वा कोऽसीति तस्य मुख्यान् प्राणानभिमृशेत्॥**

पिता गृहीतं कुमारं उपविष्टाया मातुरङ्के उदक्शिरसं निधाय पुरस्ताद‌ङ्गं व्याहृतिहोमं (५७) कृत्वा तस्य मातुरङ्के शयानस्य कुमारस्य मुख्यान् मुखस्थान् सप्त प्राणान् चक्षुश्श्रोत्र-नासिकास्यं संस्पृशेत् 'कोऽसि कतमोऽसि' इत्यादिना मन्त्रेण॥

**२०७. असाविति नाम कुर्यात्॥ १०॥**

मन्त्रे 'आहस्पत्यं मासं प्रविशासौ' इत्यत्र 'असौ' शब्दस्थाने नाम कुर्यात् विष्णुशर्मन्निति वत्सं बोधयन् ब्रूयात्॥

**२०८. तदेव मन्त्रान्ते॥ ११॥**

मन्त्रान्ते 'परिददात्वसौ' इत्यत्र 'असौ' शब्दस्थाने तदेव पूर्वोक्तमेव (२०७) नाम कुर्यादित्यनुवर्तते। तथा च गोभिलः—'आहस्पत्यं मासं प्रविशासावित्यन्ते च मन्त्रस्य घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तं कृतं नाम दध्यात्' (२.८.१४) इति॥ ११॥

२०९. मात्रे प्रथममाख्याय ॥ १२ ॥

तच्च कृतं नाम मात्रे प्रथममाख्याय तन्त्रसमापनं (१५९) कुर्यादिति शेषः। 'मात्रे चैव प्रथमं नामधेयमाख्याय यथार्थं' (२-८-१७) इति गोभिलः। नामधेये विशेषमाह स एव—'एतदतद्धितं' (२-८-१५) इति। गाङ्गेय इतिवत्ताद्धितान्तं न कुर्यादित्यर्थः। 'अयुग्दान्तं स्त्रीणां' (२-८-१६) इति च। स्त्रीणां 'यशोदा' इतिवत् कुर्यादित्यर्थः ॥ १२ ॥

अथ विप्रोषितागतकर्म ॥

२१०. [1]विप्रोष्याङ्गादङ्गादिति पुत्रस्य मूर्धानं परिगृह्णीयात् ॥

ग्रामान्तरं गत्वा प्रत्यागतः पिता कुमारमादायोभाभ्यां हस्ताभ्यां – '... उभाभ्यां पाणिभ्यां मूर्धानं परिगृह्य जपेत् ....' (२-८-२१) इति गोभिलवचनात् — तस्य मूर्धानं परितः स्पृशेत् 'अङ्गादङ्गात्संश्रवसि' इत्यादिना मन्त्रेण। उत्तरयोः 'अङ्गादङ्गात्संभवासि' 'अश्मा भव' इत्याद्योर्मन्त्रयोरप्यत्रैव विनियोगः मन्त्रलिङ्गात् ॥ १३ ॥

२११. पशूनां त्वेत्यभिजिघ्रेत् ॥ १४ ॥

मूर्धन्यभिजिघ्रेत्। ततो वामदेव्यगानम्। नित्यप्रकरणपठितत्वादवश्यानुष्ठेयं आयुष्करं चेदं कर्म ॥ १४ ॥

२१२. तूष्णीं स्त्रियाः ॥ १५ ॥

मूर्धन्यभिघ्राणं स्त्रियास्तूष्णीं कार्यम्। 'स्त्रियास्तूष्णीं

1. विप्रोष्यङ्गात्—रुद्रस्कन्दलब्धः पाठः।

मूर्धन्यभिजिघ्रणं मूर्धन्यभिजिघ्रणम्' (२-८-२४) इति गोभिलः। मन्त्रलिङ्गविरोधात् 'अमन्त्रिका' (१९७) इत्यादिस्मृतेश्च मूर्धालम्भोऽमन्त्रकस्सिद्धः। अतः अभिघ्राणमात्रस्य तूष्णींत्वं सूचितमिति भाष्यकारस्तत्रोल्लङ्घारः।

अथवा, जातकर्मण इव अभिघ्राणस्यापि तूष्णीं कर्तव्यत्वे स्मृतिवचनतः प्राप्ते पुनर्वचनं अभिघ्राणमात्रं स्त्रियाः कर्तव्यं न मूर्धपरिग्रहः (२१०) इत्येवमर्थम्। तथा च पारस्करः 'स्त्रियै तु मूर्धानमेवावजिघ्रति तूष्णीम्' इति।

'अमन्त्रिका' इत्यादिस्मृतिसमानार्थमेवेदं सूत्रमिति रुद्रस्कन्दः॥ १५॥

अथान्नप्राशनम्॥

महर्षिणा गौतमेनान्नप्राशनं नाम षष्ठस्संस्कारो ब्राह्मणानां धर्मसूत्रे सूत्रितः। तद्विधायकानि सूत्राणि खादिराचार्यैर्न सूत्रितानि। मन्त्रब्राह्मणेऽपि तदर्थो मन्त्रो नोपलभ्यते। रुद्रस्कन्दस्तु नामकरणानन्तरं जातकर्ममन्त्राभ्यामेवान्नप्राशनं ब्रूते। गोभिलसूत्रभाष्यकृद्भट्टनारायणस्तु गोभिलाचार्यैरप्यसूत्रितत्वात् पारस्करगृह्यमनुसृत्य प्रयोगमुद्धृतवान् स्वभाष्ये। स्वशाखायामनुक्तौ परतो ग्रहणं युक्तं खलु! तथा च कर्मप्रदीपे——

"यन्नाम्नातं स्वशाखायां परोक्तमविरोधि च।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत॥" इति।

प्रयोगः—

षष्ठे मासि शुभे दिने लौकिकाग्निं लक्षणे प्रतिष्ठाप्य

ब्रह्मोपवेशनान्तं कृत्वा चरुं निर्वपेत् 'प्राणाय त्वा जुष्टं निर्वपामि' इति। एवं 'अपानाय' 'चक्षुषे' 'श्रोत्राय' इति अन्ते द्विस्तूष्णीं च। अत्र प्रमाणं कर्मप्रदीपे—

"देवतासङ्ख्यया गृह्य निर्वापांस्तु पृथक् पृथक्।
तूष्णीं द्विरेव गृह्णीयाद्धोमश्चापि पृथक् पृथक्॥"

इति। चरुं श्रपयित्वा आज्यभागान्तं कृत्वा द्वे आज्याहुती जुहुयात्। मन्त्रौ—

१. देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति।
सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु स्वाहा॥

२. वाजो नो अद्य प्रसुवाति दानं वाजो देवाँ ऋतुभिः कल्पयाति।
वाजो हि मा सर्ववीरं जजान विश्वा आशा वाजपति-
र्जयेयं स्वाहा॥ इति।

अथ हविराहुतयश्चतस्रः अवदानधर्मेण—

१. प्राणेनान्नमशीय स्वाहा— प्राणायेदं न मम।

२. अपानेन गन्धानशीय स्वाहा— अपानायेदं न मम।

३. चक्षुषा रूपाण्यशीय स्वाहा— चक्षुष इदं न मम।

४. श्रोत्रेण यशोऽशीय स्वाहा— श्रोत्रायेदं न मम।

स्विष्टकृद्धोमादितन्त्रं समाप्य हविश्शेषं किंचिदादाय कुमारं तूष्णीं प्राशयेत् 'हन्त' इति वा॥

अथ चौलम्॥

२१३. तृतीये वर्षे चौलम्॥ १६॥

जन्मतस्तृतीये वर्षे ॥ १६ ॥

**२१४. तत्र नापित उष्णोदकमादर्शः क्षुरो वौदुम्बरः पिञ्जूल्य इति दक्षिणतः ॥ १७ ॥**

गृहमध्ये गोमयेनोपलिप्य लौकिकाग्निं प्रतिष्ठाप्य अग्नेर्दक्षिणतो वक्ष्यमाणान् सादयेत् । तत्र नापितः क्षुरपाणिर्दक्षिणतस्तिष्ठेत् 'क्षुरपाणिर्नापितः' (२-९-४) इति गोभिलवचनात् । अग्न्यन्तरसिद्धमुष्णोदकं कंसस्थितं, आदर्शो दर्पणः, दर्पणाभावे औदुम्बरस्ताम्रमयः क्षुरः प्रोहनार्थं, एकविंशतिसङ्ख्याकाः दर्भपिञ्जूल्यश्चेत्येतान् सादयेत् । पिञ्जूल्यश्च पवित्रसमानलक्षणाः । तथा च कर्मप्रदीपः—

"अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्रकुत्रचित् ॥

एतदेव हि पिञ्जूल्या लक्षणं समुदाहृतम् ।
आज्यस्योत्पवनार्थं यत्तदप्येतावदेव तु ॥" इति ॥ १७ ॥

**२१५. आनडुहो गोमयः [1]कृसरस्थालीपाको वृथापक इत्युत्तरतः ॥ १८ ॥**

वृषभशकृत्, कृसरस्थालीपाकः स्थाल्यां पक्वं तिलौदनम् । स च वृथापक्वः मन्त्रवति कर्मण्यनुपयुज्यमानः निर्वापादिधर्मरहितः होमेऽनुपयुज्यमानत्वात् । एतद्द्वयमग्नेरुत्तरतस्सादयितव्यम् ॥ १८ ॥

**२१६. माता च कुमारमादाय ॥ १९ ॥**

1. कृसरस्स्थालीपाकः— क ।

चकार उत्तरत इत्यस्यानुकर्षणार्थः । कुमारमादाय माता पितुरुत्तरत उपविशेदित्यध्याहारः । 'अथ माता शुचिना वसनेन कुमारमाच्छाद्य पश्चादग्नेरुदगग्रेषु दर्भेषु प्राङ्मुपविशति' (२-९-८) इति गोभिलः । एवं मातुरुपवेशनमाज्यसंस्कारानन्तरम् ॥ १९ ॥

२१७. हुत्वा [1]आयमगादिति नापितं प्रेक्षेत् सवितारं ध्यायन् ॥ २० ॥

वैरूपाक्षजपान्तं कृत्वा पुरस्ताद्ङ्गत्वेन व्याहृतिभिर्व्यस्ताभिस्समस्ताभिश्च (५९) हुत्वा सवितारं ध्यायन् 'आयमगात्सविता क्षुरेण' इति मन्त्रं जपन् क्षुरपाणिं नापितं प्रेक्षेत ॥ २० ॥

२१८. उष्णेनेत्युष्णोदकं प्रेक्षेद्वायुं ध्यायन् ॥ २१ ॥

स्पष्टम् ॥ २१ ॥

२१९. आप इत्युन्देत् ॥ २२ ॥

शिरोदक्षिणभागस्थान् केशानुष्णोदकेनोन्देद् 'आप उन्दन्तु जीवसे' इति ॥ २२ ॥

२२०. विष्णोरित्यादर्शं प्रेक्षेदौदुम्बरं वा ॥ २३ ॥

स्पष्टम ॥ २३ ॥

२२१. ओषधय इति दर्भपिञ्जूलीस्सप्तोर्ध्वाग्रा अभिनिधाय ॥ २४ ॥

पूर्वमुन्दिते शिरोदक्षिणभागे ॥ २४ ॥

---

1. अयमागात् — क

**२२२. खधित इत्यादर्शेन क्षुरेणौदुम्बरेण वा । २५ ॥**

पिञ्जूलीयुक्तान् शिरोरुहान् संयोजयेदिति शेषः ॥ २५ ॥

**२२३. येन पूषेति दक्षिणतस्त्रिः प्राञ्चं प्रोहेत् ॥ २६ ॥**

पिञ्जूलीसहितान् केशान् प्राङ्मुखं यथा भवति तथा त्रिवारमादर्शेन क्षुरेण वा संमृज्याद् 'येन पूषा' इत्यादिं मन्त्रं प्रतिवारं ब्रुवन् ॥ २६ ॥

**२२४. सकृदायसेन प्रच्छिद्यानडुहे गोमये केशान् कुर्यात् ॥**

नापितहस्तात्क्षुरमादाय तेन पिञ्जूलीसहितकेशान् सकृत् प्रच्छिद्योत्तरत्र निहिते गोमये निदध्यात् ॥ २७ ॥

**२२५. उन्दनप्रभृत्येवं पश्चादुत्तरतश्च ॥ २८ ॥**

यथा दक्षिणत एवं पश्चादुत्तरतश्च ॥ २८ ॥

**२२६. त्र्यायुषमिति [1] पुत्रस्य मूर्धानं परिगृह्य जपेत् ॥**

उभाभ्यां पाणिभ्यां मूर्धानं परिगृह्य जपेत् 'त्र्यायुषम्' इत्यादिं मन्त्रम् ॥ २९ ॥

**२२७. उदङ्ङुत्सृप्य कुशलीकारयेद्यथागोत्रकुलकल्पम् ॥**

उत्तरतः कुमारमादाय गत्वा नापितेन गोत्रविधिं कुलाचारं चानुसृत्य सशिखं विशिखं वा वापयेत् ॥ ३० ॥

**२२८. अरण्ये केशान्निखनेयुः ॥ ३१ ॥**

पूर्वमासादिते गोमये सर्वान् केशान्निधायारण्ये निखनेयुः ।

1. 'पुत्रस्य' नास्ति — घ

बहुवचनात् पित्रादिनियमाभावस्सूचितः ॥ ३१ ॥

**२२९. स्तम्बे निदधत्येके ॥ ३२ ॥**

एके शाखिनस्तृणयवादिगुच्छे निदधति ॥ ३२ ॥

**२३०. गौर्दक्षिणा ॥ ३३ ॥**

उत्तराङ्गव्याहृतिहोमं कृत्वा तन्त्रं समापयेत् । ब्रह्मणो गौर्दक्षिणा ॥ ३३ ॥

इति द्वितीये पटले तृतीयः खण्डः ॥



अथोपनयनम् ॥

२३१. अष्टमे वर्षे ब्राह्मणमुपनयेत् ॥ १ ॥

वर्षगणनं च गर्भाधानमारभ्य ॥ १ ॥

२३२. तस्याषोडशादनतीतः कालः ॥ २ ॥

तस्य ब्राह्मणस्य षोडशवर्षान्तं यावदुपनयनकालोऽनतीतः । सोऽयं उपनयनाख्यः संस्कारो वेदाध्ययनयोग्यतासिद्ध्यर्थ-कसावित्र्युपदेशार्थः ॥ २ ॥

प्रसङ्गात्क्षत्रियवैश्ययोरप्युपनयनकालमाह —

२३३. एकादशे क्षत्रियम् ॥ ३ ॥

उपनयेदित्यनुवर्तते ॥ ३ ॥

२३४. तस्याद्वाविंशात् ॥ ४ ॥

अनतीतः काल इति वर्तते ॥ ४ ॥

२३५. द्वादशे वैश्यम् ॥ ५ ॥

२३६. तस्याचतुर्विंशात् ॥ ६ ॥

स्पष्टे । एवं त्रयाणां वर्णानां मुख्यकालानन्तरं गौणः कालोऽभिहितः । 'अत ऊर्ध्वं पतितसावित्रीका भवन्ति' (२-१०-४) इति गोभिलः ॥ ५, ६ ॥

२३७. कुशलीकृतमलङ्कृतमहतेनाच्छाद्य हुत्वाग्नि व्रतप्रत इति ॥ ७ ॥

कुशलीकृतं मुण्डितं छन्दोगानां समावर्तनकाले (३२०) एव शिखावर्जक्षौरविधानात् । भूषणादिभिरलङ्कृतमहतेन वाससा (५४) आच्छाद्य, उपलेपनादि वैरूपाक्षजपान्तं (४८) कृत्वा व्यस्ताभिस्समस्ताभिश्च हुत्वा (५९) 'अग्ने व्रतपते' इत्यादिभिः पञ्चभिर्मन्त्रैः पञ्च आहुतीर्हुत्वा अञ्जलिं कारयेदित्युत्तरसूत्रेणान्वयः ।

होमे चात्र आचार्य एव कर्ता; न माणवकः । आच्छाद्य, हुत्वा, अवस्थाप्य (२३८) इति ल्यबन्तानां कारयेत् (२३८) इत्यनेन समानकर्तृकत्वात् । गोभिलश्च 'अग्ने व्रतपत इति हुत्वा पश्चादग्नेरुदगग्रेषु दर्भेषु प्राङाचार्योऽवतिष्ठते' (२-१०-१५) इति । मन्त्रं तु माणवकः पठेत् चरिष्यामीति मन्त्रलिङ्गात् । मन्त्रे व्रतमित्यत्र सावित्रमिति विशेषयेत् 'ब्रह्मचारी व्रतादेशे व्रतनाम प्रवाचयेत्' इति गृह्यासङ्ग्रहवचनात् ।

वपनात्पूर्वं माणवकस्य भोजनं विहितं गृह्यान्तरेषु । भोजनं च क्षीरप्राशनरूपमिति व्याख्यातारः पयोव्रतो ब्राह्मणो भवतीति श्रुतेः । वपनानन्तरं भोजनमिति केचित् ।

अहतवस्त्राच्छादनानन्तरं माणवकेन यज्ञोपवीतं (४) समन्त्रकं धारयेत् । तथा च बोधायनः अस्मिन् प्रकरणे — 'यज्ञोपवीतं प्रतिमुञ्चन् वाचयति-यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्रियं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः—इति' इति ॥ ७ ॥

**२३८. उत्तरतोऽग्नेः प्रत्यङ्मुखमवस्थाप्याञ्जलिं कारयेत् ॥**

माणवकमग्न्यात्मानावन्तरा – 'अन्तरेणाग्न्याचार्यौ...' (२-१०-१६) इति गोभिलवचनात् — गमयित्वा अग्नेरुत्तरतः स्थापयित्वा तेनाञ्जलिं कारयेदाचार्यः ॥ ८ ॥

**२३९. स्वयं चोपरि कुर्यात् ॥ ९ ॥**

आचार्यश्च अग्नेरुत्तरतः प्राङ्मुखो भूत्वा माणवकाञ्जले-रुपरि स्वाञ्जलिं कुर्यात् ॥ ९ ॥

**२४०. दक्षिणतस्तिष्ठन् मन्त्रवान् ब्राह्मण [1]आचार्यो-दकाञ्जलिं पूरयेत् ॥ १० ॥**

तयोर्दक्षिणत उदङ्मुखस्तिष्ठन् वेदविद्ब्राह्मणः कश्चिदाचार्यस्य अञ्जलिं पूरयेदुदकेन ॥ १० ॥

**२४१. आगन्त्रेति जपेत्प्रेक्षमाणे ॥ ११ ॥**

माणवके आचार्यन्यस्तदृष्टावाचार्यो माणवकं पश्यन् 'आगन्त्रा' 'अग्निष्टे' इत्यादी मन्त्रौ जपेत् । तत आचार्यो माणवकं 'ब्रह्मचर्यमागामुप मा नयस्व' इति वाचयेत् । तथा च गोभिलः — 'प्रेक्षमाणो जपत्यागन्त्रासमगन्महीति । ब्रह्मचर्य-मागामिति वाचयति' (२-१०-१८,१९) इति ॥ ११ ॥

**२४२. को नामासीत्युक्तो देवताश्रयं नक्षत्राश्रयं वाभि-वादनीयं नाम ब्रूयादसावस्मीति ॥ १२ ॥**

आचार्यो माणवकं पृच्छेत् 'को नामासि' इति । स चाभिवादने कथनीयं स्वनाम देवताश्रयं नक्षत्राश्रयं वा कृत्वा

---

1. आचार्यायोदकाञ्जलिं—क ख ग घ ज झ ञ ढ ठ ।

ब्रूयात् यथा ऐन्द्राग्नो विष्णुशर्मा नामास्मि विशाखो विष्णुशर्मा नामास्मीति। अश्वयुगादिक्रमेण देवताश्रयाणि नक्षत्राश्रयाणि च नामानि —

आश्विनः, आश्वयुजः। याम्यो याम्यो वा, आपभरणः। आग्नेयः, कार्त्तिकः। प्राजापत्यः, रौहिणः। सौमः, मार्गशीर्षः। रौद्रः, आर्द्रः। आदित्यः, पुनर्वसुः। बार्हस्पत्यः, तिष्यः। सार्पः, आश्लेषः। पैत्रः, माघ.। आर्यमणः, पूर्वफल्गुनः। भागः, उत्तरफल्गुनः। सावित्रः, हस्तः। त्वाष्ट्रः, चैत्रः। वायवीयः, स्वातिः। ऐन्द्राग्नः, विशाखः। मैत्रः, अनूराधः। ऐन्द्रः, ज्यैष्ठः। प्राजापत्यः, मौलः। आपः, पूर्वाषाढः। वैश्वदेवः, उत्तराषाढः। वैष्णवः, श्रावणः। वासवः, श्रविष्ठः। वारुणः, शातभिषजः। आजैकपदः, पूर्वप्रोष्ठपादः। आहिर्बुध्न्यः, उत्तरप्रोष्ठपादः। पौष्णः, रैवतः ॥ १२ ॥

## २४३. उत्सृज्यापो देवस्य त इति दक्षिणोत्तराभ्यां हस्ताभ्यामञ्जलिं गृह्णीयादाचार्यः ॥ १३ ॥

स्वाञ्जलिस्था अप आचार्यशिष्याञ्जलौ विसृजेत्। स च ता अपः। तत आचार्यशिष्याञ्जलिं मुकुलीकृतामूर्ध्वाग्रां दक्षिणोत्तराभ्यां दक्षिणः पाणिरुत्तर ऊर्ध्वो ययोस्ताभ्यां पाणिभ्यां –दक्षिणेनोर्ध्वं वामेनाधः– गृह्णीयाद् 'देवस्य ते' इत्यादिना मन्त्रेण 'असौ' शब्दस्थाने विष्णुशर्मन्निति वन्माणवकं संबोधयन् ॥ १३ ॥

## २४४. सूर्यस्येति प्रदक्षिणमावर्तयेत् ॥ १४ ॥

आचार्यश्शिष्याञ्जलिं गृह्णन्नेव 'सूर्यस्य' इत्यादिना मन्त्रेण प्रादक्षिण्येन माणवकमावर्त्य प्राङ्मुखं कुर्यात् । 'असौ' इत्यत्र पूर्ववत्संबोधनम् ॥ १४ ॥

२४५. दक्षिणमंसमन्ववमृश्यानन्तर्हितां नाभिमालभेत् प्राणानामिति ॥ १५ ॥

आचार्यो दक्षिणहस्तेन माणवकस्य दक्षिणमंसं प्रथमं संस्पृशेत् । ततो वस्त्रादिनाऽनन्तर्हितां नाभिं 'प्राणानां ग्रन्थिरसि मा विस्रसः' इति मन्त्रेणाभिमृशेत् ॥ १५ ॥

२४६. अथैनं [1] परिदद्यादन्तकप्रभृतिभिः ॥ १६ ॥

आचार्यः एनं माणवकं 'अन्तक' इत्यादिभिस्त्रिभिर्मन्त्रै-रन्तकादिभ्यो देवताभ्यः परिदद्यात् समर्पयेत् अपमृत्युरोग-परिहारार्थम् । उक्तमापस्तम्बेनापि 'देवताभ्यः परिदाय' इति । मन्त्रेषु 'अमुं' शब्दस्थाने माणवकनाम द्वितीयान्तं ब्रूयात् । उदरादिशब्दानामूहे मन्त्रेऽदश्शब्दप्रयोगस्य व्यर्थतापत्तिः । दृश्यते च सर्वत्र 'असौ' 'अमुं' इत्यादिमन्त्रघटकादश्शब्दस्थाने नाम्नामेवोहः । आचार्यः दक्षिणेन पाणिना माणवकस्य नाभिं स्पृशन् 'अन्तक' इत्यादिं मन्त्रं ब्रूयात् गोभिलगृह्ये मन्त्रस्यास्य नाभ्यभिमर्शन एव विनियोगात् । अत एव नाभ्यभिमर्शन-रूपसमानधर्मवत्त्वेऽपि क्रियान्तरत्वं द्योतयितुमथशब्दस्सूत्रे प्रयुक्तः । जठरं स्पृशन् 'अहुर' इत्यादिं, हृदयं स्पृशन् 'कृशन' इत्यादिं च मन्त्रं ब्रूयात् । अहुरो जाठरोऽग्निः । कृशनो हृच्छयः पुरुषः मन्त्रलिङ्गात्, सूत्रान्तराच्च उक्तदेशस्पर्शप्राप्तिः ॥ १६ ॥

---

1. परिदध्यात्—घ ङ झ ञ ट ठ ।

२४७. दक्षिणमंसं प्रजापतये त्वेति ॥ १७ ॥

दक्षिणेन पाणिना दक्षिणमंसं स्पृशन् 'प्रजापतये त्वा' इत्यादिं मन्त्रं ब्रूयात्। 'असौ' शब्दस्थाने संबुद्ध्यन्तं माणवकनाम गृह्णीयात् ॥ १७ ॥

२४८. सव्येन सव्यं देवाय त्वेति ॥ १८ ॥

स्पष्टम् ॥ १८ ॥

२४९. ब्रह्मचार्यसीति संप्रेष्य ॥ १९ ॥

मन्त्रे 'असौ' शब्दस्थाने माणवकनाम संबुद्ध्यन्तं ब्रूयात्। ब्रह्मचार्यसीत्यारभ्य मा दिवा स्वाप्सीरित्यन्तं वदन् संप्रेष्य व्रतमादिश्य। यतो ब्रह्मचार्यस्यतस्समिधमाधेहि अपोऽशान कर्म कुरु मा दिवा स्वाप्सीरित्यर्थान्वयः। समिधमाधेहीत्यादिषु चतुर्ष्वादेशेषु क्रियमाणेषु प्रत्यादेशं माणवको बाढमिति ब्रूयात्। अत्र गोभिलः— 'अथैनं संप्रेष्यति ब्रह्मचार्यस्यसाविति' (२-१०-२९) इति ॥ १९ ॥

२५०. उपविश्य दक्षिणजान्वक्तमञ्जलिकृतं प्रदक्षिणं मुञ्जमेखलामाबध्नन् वाचयेदियं दुरुक्तादिति ॥

आचार्यः प्राङ्मुखोऽग्नेरुत्तरतस्स्वयमुपविश्य प्रत्यङ्मुखं दक्षिणजानुना भुवमाक्रम्योपविष्टं कृताञ्जलिं माणवकं वाचयेद् 'इयं दुरुक्ताद्' इत्यादिं मन्त्रं, स्वयं तं मेखलामाबध्नन्। 'ऋतस्य गोप्त्री' इत्यादेर्मन्त्रस्याप्यत्रैव विनियोगः, मन्त्रलिङ्गात्। गोभिलश्चात्र — '... प्राङाचार्य उपविशत्युदगग्रेषु दर्भेषु।

प्रत्यङ् माणवको दक्षिणजान्वक्तोऽभिमुख आचार्यमुदगग्रेष्वेव दर्भेषु। अथैनं त्रिः प्रदक्षिणं मुञ्जमेखलां परिहरन् वाचयतीयं दुरुक्तात्परिबाधमानेति, ऋतस्य गोप्त्रीति च।' (२-१०-३१-३३ इति)।

अस्मिन्नेव काले कृष्णाजिनधारणं सूत्रान्तरोक्तं कर्तव्यम्। तत्र मन्त्रः—

"मित्रस्य चक्षुर्द्धरुणं बलीयस्तेजो यशस्वि स्थविरं समिद्धम्।
अनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं दधेऽहम्॥"
इति॥ २०॥

२५१. अधीहि भो इत्युपसीदेत्॥ २१॥

तथैव प्राङ्मुखमुपविष्टमाचार्यं प्रत्यङ्मुखश्शिष्यः कृताञ्जलिपुटः 'अधीहि भोः' इति वदन् उपसीदेत शुश्रूषया आचार्यमुखदत्तदृष्टिर्भवेत्॥ २१॥

२५२. तस्मा अन्वाह सावित्रीं पच्छोऽर्धर्चशस्सर्वामिति॥

तस्मै शिष्यायाचार्योऽनुक्रमेण ब्रूयात्सावित्रीं प्रथमं पादशः, ततोऽर्धर्चेऽवसाय, ततस्सर्वामेव॥ २२॥

२५३. महाव्याहृतीश्चैकैकश ओङ्कारं च॥ २३॥

'भूः' 'भुवः' 'स्वः' इत्येता महाव्याहृतयः। ताश्च प्रत्येकमन्ते ओंकारं च अन्वाहेत्यनुवर्तते। तथा च गोभिलः— 'महाव्याहृतीश्च विहृता ओंकारान्ताः' (२-१०-३६) इति। 'महाव्याहृतीश्चैकैकशः। ओंकारं च।' इति सूत्रच्छेदाङ्गीकारे

पूर्वसूत्रे एकैकश इत्यस्य प्रयोजनं चिन्त्यम् केवलमहाव्याहृति-शब्दस्य व्यस्तव्याहृतिपरत्वेनैव आचार्यैः प्रयुक्तत्वात ॥ २३ ॥

**२५४. प्रयच्छत्यस्मै वार्क्षं दण्डं सुश्रवस्सुश्रवसं मेति ॥**

दण्डः पालाशः; 'पार्णबैल्वाश्वत्था दण्डाः' (२-१०-१०) इति गोभिलोक्तेः। स च शिरोमात्रः। तथा च मनुः 'केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः' इति।

उक्तं दण्डं प्रयच्छन् माणवकाय तं वाचयेत 'सुश्रव-स्सुश्रवसं मा कुरु' इत्यादिं मन्त्रम। तथा च गोभिलः — 'वार्क्षं चास्मै दण्डं प्रयच्छन् वाचयति सुश्रवस्सुश्रवसं मा कुर्विति' (२-१०-३७) इति। अनन्तरं व्याहृतिहोमाद्युपरिष्टात्तन्त्रं समापयेत ॥ २४ ॥

**२५५. समिधमादध्यादग्नये समिधमिति ॥ २५ ॥**

अथ शिष्यस्तस्मिन्नेवाग्नौ समिधमादध्यादुक्तेन मन्त्रेण। नित्यहोमवत्पर्युक्षणं तूष्णीं समिदाधाने (१११) च ॥

अथ आदित्यमुपस्थाय अग्निं प्रदक्षिणीकृत्य —

**२५६. भैक्षं चरेत् ॥ २६ ॥**

भैक्षं भिक्षासमूहम्। 'भवति भिक्षां देहि' इति ॥

**२५७. मातरमग्रे ॥ २७ ॥**

भिक्षेतेति शेषः ॥

**२५८. अथान्यास्सुहृदः ॥ २८ ॥**

अथ मातृभिक्षणानन्तरमन्यास्त्रिग्धहृदयास्त्रियो भिक्षेत। अत्र मनुश्च —

"प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम्।
प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधि॥
भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः।
भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम्॥
मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम्।
भिक्षेत भिक्षां प्रथमं या चैनं नावमानयेत्॥" इति॥

२५९. **आचार्याय भैक्षं निवेदयेत्॥ २९॥**

आहृतं भैक्षमाचार्याय 'भैक्षं भोः' इति निवेदयेत्। ततस्तदनुमत्या प्राङ्मुखो भूत्वा तद्भुञ्जीत 'निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखश्शुचिः' इति मनुवचनात्॥ २९॥

२६०. **तिष्ठेदास्तमयात्तूष्णीम्॥ ३०॥**

सूर्यास्तमयपर्यन्तं वाग्यतस्तिष्ठेत्॥ ३०॥

२६१. **त्रिरात्रं [1]क्षारलवणे दुग्धमिति वर्जयेत्॥ ३१॥**

इतिस्समुच्चयार्थः। क्षारदुग्धशब्दौ व्याख्यातौ (८५)। अधिगतसावित्रीको यथाकालं सन्ध्याः नित्यमुपासीत। तथा च जैमिनिः—

"ततो माध्याह्नसन्ध्यादि सर्वं कर्म समाचरेत्।
यावद्ब्रह्मोपदेशस्तु तावत्सन्ध्यादिकं न च॥" इति॥

इति द्वितीये पटले चतुर्थः खण्डः।

---

1. क्षारलवणदुग्धमिति—क।

पूर्वस्मिन् खण्डे उपनयनमुक्तम् । तच्च सावित्रव्रतसंबन्धि सावित्र्युपदेशपूर्वकं गायत्रसामोपदेशार्थमित्यर्थः । सावित्रव्रतं च सहप्रवचनीयम् । यतस्तत्र व्रतादेशेन सहैव प्रकृतवेदोपदेशः क्रियते । गोदानादीनि तु अनुप्रवचनीयानि । तेषु अनु पश्चात् व्रतान्ते प्रकृतवेदोपदेशः क्रियते । सावित्रव्रतस्य कालश्चाष्टौ वर्षाणि अष्टौ मासा अष्टौ दिनानि वा । तथा च कात्यायनः—'सावित्रमष्टभिर्वर्षैः कार्यं मासैर्दिनैश्च वा' इति । व्रतस्यान्ते सवित्रे स्वाहेत्याज्यहोमः । व्रतस्यास्य विशेषहोमेऽयम् । तथा च गृह्यान्तरम्—'सहप्रवचनान्ते सावित्रश्चरुर्गोदानादीन्यनुप्रवचनीयानि व्रतानि ऐन्द्रस्थालीपाकान्तानि भवन्ति' इति । गोभिलश्च सावित्रव्रतप्रकरणे 'तस्यान्ते सावित्रश्चरुः' (२-१०-४४) इति, ऐन्द्रः स्थालीपाकस्तस्य जुहुयादृचं साम यजामह इत्येतयर्चा सदसस्पतिमद्भुतमिति वोभाभ्यां वा । अनुप्रवचनीयेष्वेवं सर्वत्र ।' (३-२-४१,४२) इति च आचार्यैर्गोदानादिष्वनुप्रवचनीयेष्वाज्यहोमस्यैव विधानादस्माकं सावित्रव्रतेऽप्याज्यहोम एव सवितृदेवताकः । 'अग्ने व्रतपते' इत्यादिभिश्च पञ्चभिर्जुहुयात् । मन्त्रांस्तु

"अग्ने व्रतपते व्रतमचारिषं तत्ते प्रब्रवीमि तदशकम् ।
तेनारात्समिदमहमनृतात्सत्यमुपागाम् स्वाहा ॥"

इतिवत् सन्नमयन् ब्रूयात् 'सर्वत्राचारिषं तदशकं तेनारात्समुपागामिति मन्त्रविशेषः (३-२-४३)' इति गोभिलवचनात् । व्रतनामविशेषणं च पूर्ववदेव ।

एवं सामवेदप्रकृतिभागाध्ययने प्रतिवेदभागं व्रताचरणं,

तत्र च प्रतिव्रतमुपनयनं, वेदभागश्रावणं, व्रतसमापनं चेति कर्तव्यक्रमोऽवगम्यते ।

सावित्र्यध्ययनानन्तरमाग्नेयैन्द्रपावमानपर्वणामध्ययनार्थं गोदानव्रतमाचरणीयम् । गावो लोमानि दीयन्ते खण्ड्यन्ते अस्मिन् (१६३) इति गोदानशब्दव्युत्पत्तिः । गोदान-व्रतोपनयने सावित्रव्रतोपनयने इव कुशलीकरणेऽमन्त्रकमुण्डनरूपे प्राप्ते आह —

**२६२. गोदाने चौलवत् कल्पः ॥ १ ॥**

कल्पः केशक्लृप्तिर्वपनमित्यर्थः । सः गोदाने, चौले इव कार्यः । गोभिलश्च 'चूडाकरणेन केशान्तकरणं व्याख्यातम्' (३-१-२) इति । व्रातिकादिषु तु (२७८) सावित्रनिर्विशेषमेव कुशलीकरणं गोदाने एव विशेषाभिधानात् । होमश्चात्रातिदिष्ट एव ब्रह्मदक्षिणाविधानात् (२६४) लिङ्गात् । अतोऽत्रापि व्यस्ताभिस्समस्ताभिश्च व्याहृतिभिः पूर्वाङ्गहोमः । माता तु निवर्तते आदानस्य (२१६) असंभवात् । कृसरस्थालीपाकत्र्या-युषजपावपि निवर्तेते इति रुद्रस्कन्दः । अत्र ब्रह्मचार्येव कर्तेति गोभिलमतम् ॥ १ ॥

**२६३. सलोमं वापयेत् ॥ २ ॥**

सर्वाण्यङ्गलोमानि च वापयेदित्यर्थः ॥ २ ॥

**२६४. गोऽश्वाविमिथुनानि दक्षिणाः पृथग्वर्णानाम् ॥ ३ ॥**

गोमिथुनं ब्राह्मणस्य । अश्वमिथुनं क्षत्रियस्य, अजमिथुनं वैश्यस्य ब्रह्मदक्षिणा ॥ ३ ॥

**२६५. सर्वेषां वा गौः ॥ ४ ॥**

स्पष्टम् ॥ ४ ॥

**२६६. अजः केशप्रतिग्रहाय ॥ ५ ॥**

केशप्रतिग्रहो नापितः तस्मा अजो देयः। एवं गोदाने कुशलीकरणविधिरुक्तः। अलङ्काराहतवासो विषये पश्चाद्वक्ष्यति। उपनयनहोमादीनि कथं कार्याणीत्याकाङ्क्षायामाह—

**२६७. उक्तमुपनयनम् ॥ ६ ॥**

सावित्रव्रतप्रकरण इति शेषः। उपनयनहोमादि संप्रेषणान्तं सावित्रव्रते इवात्राप्यनुष्ठेयम्। समस्ताभिर्व्याहृतिभिश्च पूर्वाङ्गहोमः 'एवं चौलोपनयनगोदानेषु' (५९) इति वचनात्। तत्र उपनयनशब्देन प्रसिद्धं सावित्रव्रतोपनयनमेवोच्यते गोदानस्य पृथग्ग्रहणात्। अस्ति चोपनयनशब्दस्य सावित्रव्रतोपनयनमात्रपरत्वम् यथा गोभिलसूत्रमस्मिन् प्रकरणे 'उपनयनेनैवोपनयनं व्याख्यातम्' (३-१-८) इति। यथा वा अस्मत्सूत्रम् 'अष्टमे वर्षे ब्राह्मणमुपनयेत्' (२३१) इति। एवं च व्रातिकाद्युपनयनेषु व्यस्ताभिरेव व्याहृतिभिर्होमः ॥ ६ ॥

होममन्त्रे व्रतमित्यत्र गोदानव्रतमिति वदेत्। संप्रेषणान्तं कृत्वोपरिष्टात्तन्त्रं समापयेत् ॥ ६ ॥

**२६८. [1]नाचरिष्यन्तं संवत्सरम् ॥ ७ ॥**

उपनयेदिति शेषः। गोदानस्य व्रतकाल एकस्संवत्सरः। तं कालं व्रतचरणमनिच्छन्तं नोपनयेत् ॥ ७ ॥

1. आचरिष्यन्तं — ख।

२६९. अनियुक्तं त्वहतम् ॥ ८ ॥

सावित्रव्रतोपनयन इवात्राहतं वासो नियतं न भवति ॥

२७०. तथालङ्कारः ॥ ९ ॥

स्पष्टम् ॥ ९ ॥

व्रतकाले ब्रह्मचारिणो नियमानाह—

२७१. अधस्संवेशी ॥ १० ॥

भवेदिति शेषः। भूमौ शयीत कम्बलादौ वा न खट्वायाम्। गुरोश्शयनादधश्शयीत। तथा च मनुः—'नीचं शय्यासनं चास्य सर्वदा गुरुसन्निधौ' इति ॥ १० ॥

२७२. अमधुमांसाशी स्यात् ॥ ११ ॥

स्पष्टम् ॥ ११ ॥

२७३. मैथुनक्षुरकृत्यस्नानावलेखनदन्तधावनपादधावनानि वर्जयेत् ॥ १२ ॥

रागपूर्वकं स्त्रिया दर्शनस्पर्शनादिकं, क्षुरेण मुण्डनं, सुखार्थं स्नानं, कङ्कतादिना केशसंस्कारः, दन्तधावनं, पादेन पादधावनं उद्वर्तनपूर्वकं वा पादधावनमित्येतानि वर्जयेत्। कर्तर्या मुण्डनं, विहितं स्नानं, पादप्रक्षालनं चानिषिद्धानि ॥ १२ ॥

२७४. नास्य कामे रेतः स्कन्देत् ॥ १३ ॥

बुद्धिपूर्वकं रेतस्स्कन्दनं न कुर्यात् ॥ १३ ॥

२७५. न गोयुक्तमारोहेत् ॥ १४ ॥

गोयुक्तं शकटादि ॥ १४ ॥

२७६. न ग्राम उपानहौ ॥ १५ ॥

धारयेदिति शेषः ॥ १५ ॥

२७७. मेखलाधारणभैक्षचरण[1]दण्डसमिदाधानोपस्पर्शन-
प्रातरभिवादा नित्यम् ॥ १६ ॥

मेखलाधारणादयो नियमाः सावित्रोपनयनमारभ्य आप्लवनपर्यन्तं स्थायिनः। भैक्षचरणप्रकार उक्तः (२५६)। दण्डः दण्डधारणम्। मेखलादण्डौ यज्ञोपवीतादीनामप्युपलक्षणम्। तथा च स्मृतिः—

"मेखलमजिनं दण्डमुपवीतं च नित्यशः।
कौपीनं कटिसूत्रं च ब्रह्मचारी तु धारयेत् ॥" इति ॥

मेखलाजिनदण्डोपवीतानां जीर्णत्वे नूतनानां समन्त्रकं ग्रहणं जीर्णानामप्सु विसर्जनं च कार्यम्। तथा च मनुः—

'मेखलामजिनं दण्डमुपवीतं कमण्डलुम्।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत् ॥' इति।

समिदाधानं नित्यं सायं प्रातश्च आचार्याग्नौ (१९१) लौकिकाग्नौ वा नित्यहोमविधिना कार्यम्। 'अग्नये समिधं' इत्यादिना मन्त्रेण एकैवाहुतिः। उपस्पर्शनं स्नानम्। 'सकृत्तु ब्रह्मचारिणः' इति प्रतिदिनं ब्रह्मचारिणः प्रातस्सकृत् स्नानं विहितम्। प्रातरभिवादः प्रातस्समिदाधानानन्तरं वृद्धानामभिवादनम्। तत्प्रकारमाह मनुः—

1. भैक्षचर्य—क ख ट। भैक्षाचरण—ग ञ।

'अभिवादात्परं विप्रो ज्यायांसमभिवादयन्।
असौ नामाहमस्मीति स्वं नाम परिकीर्तयेत्।
भोश्शब्दं कीर्तयेदन्ते स्वस्य नाम्नोऽभिवादने॥' इति॥

आश्वलायनश्च—

'वामं वामेन संस्पृश्य दक्षिणेन तु दक्षिणम्।
हस्तेन कर्णौ हस्ताभ्यां गुरूणामभिवादयेत्॥' इति॥

स्वपाणिभ्यां स्वकर्णौ स्पृशन् 'अभिवादये ··· शर्मा नामाहमस्मि भोः' इति ब्रूयादित्यर्थः॥

पादोपसङ्ग्रहणं च कर्तव्यम्। तत्प्रकारश्च मनुना प्रोक्तः—

'व्यत्यस्तपाणिना कार्यमुपसङ्ग्रहणं गुरोः।
सव्येन सव्यस्स्प्रष्टव्यो दक्षिणेन तु दक्षिणः॥' इति॥

'उत्तानाभ्यां पाणिभ्यां' इति पैठीनसिः॥

**२७८. गोदानव्रातिकादित्यव्रतौपनिषदज्येष्ठसामिकास्संवत्सराः॥ १७॥**

गोदानस्वरूपं पूर्वमुक्तम्। व्रातिकव्रतं च ज्येष्ठसामव्यतिरिक्तार्कद्वन्द्वव्रतपर्वणामध्ययनार्थम्। आदित्यव्रतं शुक्रियपर्वाध्ययनार्थम्। औपनिषदमुपनिषदध्ययनार्थम्। ज्येष्ठसामिकं ज्येष्ठसामाध्ययनार्थम्। सर्वाण्येकवर्षकालानि। सर्वेष्वन्त एवाध्ययनम्॥

व्रातिकादीनां गोदानव्रतस्येव नियमाः, गोदानेन सहपाठात्। आदित्यशाक्करव्रतयोर्वक्ष्यमाणा नियमविशेषाश्च भवेयुः। सर्वत्र उपनयनेऽहतवासोऽलङ्कारयोरनियमः॥ १७॥

२७९. नादित्यव्रतमेकेषाम् ॥ १८॥

येषां शाखिनां आरण्यकान्तर्भूतानि शुक्रियाणि, कौथुमानामिव पृथङ् न पठ्यन्ते तेषां तदध्ययनार्थमादित्यव्रतं नानुष्ठेयम ॥

२८०. ये चरन्त्येकवाससो भवन्ति ॥ १९ ॥

आदित्यव्रतं ये चरन्ति तेऽधरीयं वास एव धारयन्ति नोत्तरीयमजिनं वा ॥ १९ ॥

२८१. आदित्यं च नान्तर्दधते ॥ २० ॥

छत्रादिना आतपवारणं न कुर्वन्ति । अत्र गोभिलः — 'आदित्यं च नान्तर्दधतेऽन्यत्र वृक्षशरणाभ्याम्' (३-१-३०) इति ॥ २० ॥

२८२. न चापोऽभ्युपयन्ति ॥ २१ ॥

जानुभ्यामूर्ध्वमपस्स्नानार्थमपि नावतरन्ति । तथा च गोभिलः— 'नापोऽभ्यवयन्त्यूर्ध्वं जानुभ्यामगुरुप्रयुक्ताः' (३-१-३१) इति ॥ २१ ॥

२८३. शक्करीणां द्वादश नव षट् त्रय इति विकल्पाः ॥

शक्करीणां महानाम्नीनां व्रतकालो द्वादश संवत्सरा नव षट् त्रयो वा ॥ २२ ॥

व्रतस्यास्य विशिष्टान्नियमानाह —

२८४. कृष्णवस्त्रः ॥ २३ ॥

भवेदिति शेषः । वस्त्रं च नीलीभिन्नेन रञ्जकद्रव्येण कृष्णीकर्तव्यम् ॥ २३ ॥

२८५. कृष्णभक्षः ॥ २४ ॥

भवेदिति शेषः ॥ २४ ॥

२८६. आचार्याधीनः ॥ २५ ॥

उपनयनादेवाचार्याधीनत्वे सिद्धे पुनर्वचनमादरातिशयद्योतनार्थम् ॥ २५ ॥

२८७. तिष्ठेद्दिवा ॥ २६ ॥

२८८. आसीत नक्तम् ॥ २७ ॥

स्पष्टे ॥ २७ ॥

२८९. संवत्सरमेकेषां पूर्वैश्श्रुताश्चेत् ॥ २८ ॥

यस्य पूर्वैर्महानाम्न्यश्श्रुता अधीतास्तस्यैकस्संवत्सरो व्रतकाल इत्येके मन्यन्ते ॥ २८ ॥

२९०. [1]उपोषिताय परिणद्धाक्षायानुगापयेत् ॥ २९ ॥

व्रतेऽनुष्ठिते उपोषितं, वाससा पिहितलोचनं शिष्यं तिस्रश्शक्करीः पुरीषपदानि चानुगापयेदाचार्यः ॥ २९ ॥

२९१. यथा मा न प्रधक्ष्यतीति तं प्रातरभिवीक्षयन्ति यान्यप्रधक्ष्यन्तं[2] मन्यन्तेऽपोऽग्निं वत्समादित्यम् ॥

1. उपोषिताय परिणद्धाक्षायानुगापयेद्यथा मा न प्रधक्ष्यतीति । तं प्रातरभिवीक्षयन्ति यान्यप्रधक्ष्यन्ति मन्यन्तेऽपोऽग्निं वत्समादित्यम् — ग

2. अप्रधक्षन्तं — क । अप्रधक्षयन्तं — ङ

उत्तरदिनेऽक्षिपरिणहनवाससो मोक्षः । मोक्षकाले माणवकश्चारित्रव्रतश्शक्तीस्वीकरणेन समिद्धतेजा यं प्रथमं पश्येत् स दह्येत । अतो बन्धुजना यथा स्वदाहो न भवेत्तथाकरणार्थं येषां वस्तूनां प्रदाहं स न करिष्यतीति मन्यन्ते तानि प्रथमम-भिवीक्षयन्ति । तान्यह— अपोऽग्निं वत्समादित्यमिति ॥ ३० ॥

तेषां वीक्षणे मन्त्रानाह—

**२९२. अपोऽभिव्यख्यमित्यपो ज्योतिरभिव्यख्यमित्यग्निं पशूनभिव्यख्यमिति वत्सं सुरभिव्यख्यमित्यादित्यं विसृजेद्वाचम् ॥ ३१ ॥**

परिणहनप्रभृति वाग्यतस्य माणवकस्यैवं मन्त्रोच्चारणमेव प्रथमो वाग्विसर्गः ॥ ३१ ॥

**२९३. गौर्दक्षिणा ॥ ३२ ॥**

प्रथममाचार्याय देया ॥ ३२ ॥

**२९४. कंसो वासो रुक्मश्च ॥ ३३ ॥**

कंसः कांस्यपात्रं, वासो वस्त्रं, रुक्मस्स्वर्णाभरणम् । एतान्याचार्याय देयानि । सामत्रित्वापेक्षया दक्षिणात्रित्वम् ॥

**२९५. अनुप्रवचनीयेष्वृचं साम सदसस्पतिमिति चाज्यं जुहुयात् ॥ ३४ ॥**

अनुप्रवचनीयेषु सावित्रभिन्नेषु व्रतेषु व्रतान्ते श्रावणानन्तरं समाप्तिहोमे 'ऋचं साम' 'सदसस्पतिं' इत्यादिभ्यां मन्त्राभ्यामाज्याहुती जुहुयात् । 'अग्ने व्रतपते··· अचारिषं' इत्यादिभिश्च पञ्चभिर्जुहुयात् ॥ ३४ ॥

२९६. **चित्ययूपोपस्पर्शनकर्णक्रोशाक्षिवेपनेषु सूर्याभ्युदितः सूर्याभिनिम्रुक्त[1] इन्द्रियैश्च पापस्पर्शैः पुनर्मामित्येताभ्यामाहुती[2] जुहुयात् ॥ ३५ ॥**

चित्यं चयनं, यूपः पशुबन्धनार्थः स्तम्भः, यज्ञकर्मानन्तरं तयोस्स्पर्शे कृते, श्रोत्रे शब्दिते, वामेऽक्षिणि स्पन्दिते, सूर्यस्योदये अस्तमये च स्वापे समाचरिते, इन्द्रियैश्च निषिद्धमेवायां कृतायां 'पुनर्मा' 'पुनर्मनः' इत्यादिभ्यां मन्त्राभ्यां आज्याहुती जुहुयात् आज्यतन्त्रेण ॥ ३५ ॥

२९७. **आज्यलिप्ते वा समिधौ ॥ ३६ ॥**

प्रचुराज्याभावे आज्यलिप्ते समिधौ जुहुयान्नित्यहोमविधिना ॥ ३६ ॥

२९८. **जपेद्वा लघुषु जपेद्वा लघुषु ॥ ३७ ॥**

स्वल्पेषु पापेषु पूर्वोक्तौ मन्त्रौ जपेत्। द्विरुक्तिः पटलसमाप्तिसूचिका ॥ ३७ ॥

**इति पट्टाभिरामार्यकृतायां** खादिरसूत्रवृत्तौ **सूत्रार्थबोधिन्यां द्वितीये पटले पञ्चमः खण्डः ॥**

**समाप्तो द्वितीयः पटलः ॥**



1. अभिनिर्मुक्त—क ख ट ठ। 2. आहुतीः—ख ग; आहुतिं—क ज्ञ ढ।

## अथ तृतीयः पटलः ॥

२९९. आप्लवने पुरस्तादाचार्यकुलस्य परिवृत आस्ते ॥

आप्लवने वेदाध्ययनानन्तरं कर्तव्ये स्नानकर्मण्याचार्यगृहस्य पुरतः परिवृते मण्टपवितानादिना सर्वत आच्छादिते प्रदेशे प्राङ्मुख उदगग्रेषु दर्भेषु आस्ते आसीत ब्रह्मचारीति शेषः ॥१॥

३००. उदङ्मुख आचार्यः प्रागग्रेषु ॥ २ ॥

तस्य दक्षिणत आचार्य उदङ्मुखः प्रागग्रेषु दर्भेष्वासीत ॥

३०१. एवं ब्रह्मवर्चसकामः ॥ ३ ॥

ब्रह्मवर्चसकाम एवं गृहस्य पुरत आसीत ॥ ३॥

३०२. गोष्ठे पशुकामः ॥ ४ ॥

स्पष्टम ॥ ४ ॥

३०३. सभायां यशस्कामः ॥ ५ ॥

सभायां गृहमध्ये ॥ ५ ॥

३०४. सर्वौषधेनापः फाणयेत् ॥ ६ ॥

सर्वाभिरोषधीभिः— यथालाभं— संयोज्य अपः फाणयेत्तप्ताः कुर्यात् । ओषधयश्च—

"व्रीहयश्शालयो मुद्गा गोधूमास्सर्षपास्तिलाः ।
यवाश्चौषधयस्सप्त विपदो घ्नन्ति धारिताः ॥" इति ॥

३०५. सुरभिभिश्च ॥ ७ ॥

गन्धद्रव्यैश्च संयोज्य फाणयेत्। ७ ॥

३०६. ताभिश्शीतोष्णाभिराचार्योऽभिषिञ्चेत् ॥ ८ ॥

ताभिः फाणिताभिरद्भिः शीतोष्णाभिः शीतजलयुक्ताभिराचार्यश्शिष्यमभिषिञ्चेत्। अयमेकः पक्षः ॥ ८ ॥

३०७. स्वयं वा मन्त्राभिवादात् ॥ ९ ॥

अथवा स्वयमेव शिष्य आत्मानमभिषिञ्चेत्। अयमपरः पक्षः। अत्रोपपत्तिमाह मन्त्राभिवादादिति— 'यो रोचनः' इत्यादौ मन्त्रे 'तेनाहं मामभिषिञ्चामि' इति पाठात् ॥ ९ ॥

३०८. उभावित्येके ॥ १० ॥

एके पुनरुभावप्यभिषिञ्चेतामिति ब्रुवते। अयमन्यः पक्षः ॥

३०९. तेनेमामित्याचार्यो ब्रूयात् ॥ ११ ॥

आचार्यकर्तृकेऽभिषेके 'तेनाहं मां' इत्यत्र 'तेन मां' इत्यत्र च 'तेनेमं' इति ब्रूयात् ॥ ११ ॥

अभिषेकप्रकारमाह—

३१०. येऽप्स्वित्यपामञ्जलिमवसिञ्चेत् ॥ १२ ॥

शिष्यः पूर्वोक्तशीतोष्णजलैः पूर्णमञ्जलिं भूमौ विसृजेद् 'येऽप्सु' इत्यादिं मन्त्रं ब्रुवन् ॥ १२ ॥

३११. यदपामिति च ॥ १३ ॥

३१२. तूष्णीं च ॥ १४ ॥

अपामञ्जलिमवसिञ्चेदित्यनुवर्तते ॥ १३, १४ ॥

३१३. यो रोचन इति गृह्यात्मानमभिषिञ्चेत् ॥ १५ ॥

शिष्यः शीतोष्णोदकमञ्जलिना गृहीत्वा आत्मानमभिषिञ्चेत 'यो रोचनः' इत्यादिना मन्त्रेण ॥ १५ ॥

३१४. येन स्त्रियमिति च ॥ १६ ॥

३१५. तूष्णीं च ॥ १७ ॥

गृह्यात्मानमभिषिञ्चेदित्यनुवर्तते ॥ १६, १७ ॥

३१६. उद्यन्नित्यादित्यमुपतिष्ठेत् ॥ १८ ॥

शुष्कं वस्त्रं परिधाय सूर्याभिमुखस्तिष्ठन्नादित्यमुपतिष्ठेदुपतिष्ठेत स्तुवीत 'उद्यन्' इत्यादिना मन्त्रत्रयेण ॥ १८ ॥

३१७. समस्येद्वा ॥ १९ ॥

'उद्यन् भ्राजभृष्टिभिरिन्द्रो मरुद्भिरस्थात प्रातर्यावभिरस्थात सान्तपनेभिरस्थात सायं यावभिरस्थाद्दशसनिरसि शतसनिरसि सहस्रसनिरसि दशसनिं मा कुरु शतसनिं मा कुरु सहस्रसनिं मा कुर्यात्त्वा विशाम्यामा विश' इति समस्य सकृदेवोपतिष्ठेत वा ॥

३१८. विहरन्ननुसंहरेच्चक्षुरसीति ॥ २० ॥

यदि यथामन्त्रपाठं त्रिवारमुपतिष्ठेत तदा प्रतिवारं 'चक्षुरसि' इत्यादिं मन्त्रं जपेत । समस्य सकृच्चेत्सकृदेव ॥

३१९. उदुत्तममिति मेखलामवमुञ्चेत् ॥ २१ ॥

अवमुञ्चेदिति छेदनप्रतिषेधार्थमधस्तान्मोचनार्थं च ॥

३२०. प्राश्य वापयेच्छिखावर्जं केशश्मश्रुलोमनखानि ॥

'दधि तिलान् वा प्राश्य' इति पारस्करवचनाद्यथाभिलाषं प्राश्य शिखावर्जं वापयेत् । केशाः शिरोरोमाणि, श्मश्रु मुखस्थं रोमजातं, लोम इतराङ्गस्थं, नखं प्रसिद्धम् ॥ २२ ॥

३२१. अलङ्कृतोऽहतवाससा श्रीरिति स्रजं प्रतिमुञ्चेत् ॥

अहतवाससा नूतनवस्त्रेणोत्तरीयेण चालङ्कृतः— '··अहते वाससी परिधाय···' (३-४-२४) इति गोभिलोक्तेः—'श्रीरसि मयि रमस्व' इति मन्त्रेण स्रजं शिरस्याबध्नीत । इदानीं यज्ञोपवीतद्वितयं च धारयेत ॥ २३ ॥

३२२. नेत्र्यौ स्थ इत्युपानहौ ॥ २४ ॥

प्रतिमुञ्चेदित्यनुवर्तते ॥ २४ ॥

३२३. वैणवं दण्डमादध्याद्गन्धर्वोऽसीति ॥ २५ ॥

स्पष्टम् ।

दण्डादिधारणे च स्मृत्यन्तरम् —

"वैणवं धारयेद्यष्टिमन्तर्वासस्तथोत्तरम् ।
यज्ञोपवीतद्वितयं सोदकं च कमण्डलुम् ॥

छत्रं चोष्णीषममलं पादयोश्चाप्युपानहौ ।
रौक्मे च कुण्डले चैवं कृत्तकेशनखो द्विजः ॥" इति ॥

३२४. उपेत्याचार्यं परिषदं प्रेक्षेद्यक्षमिवेति ॥ २६ ॥

एवमलङ्कृत आचार्यमुपेत्य आचार्यसहितां परिषदं प्रेक्षेत 'यक्षमिव' इत्यादिं मन्त्रं ब्रुवन् ॥ २६ ॥

**३२५. उपविश्यौष्ठापिधानेति मुख्यान् प्राणानभिमृशेत् ॥**

आचार्यसमीप उपविश्य मुख्यान् प्राणान् चक्षुश्श्रोत्र-नासिकास्यं स्पृशेद् 'ओष्ठापिधाना' इत्यादिं मन्त्रं जपन् ॥

अत्र कृतस्नानाय शिष्याय आचार्यकर्तृकमर्हणं विधत्ते गोभिलः 'अत्रैनमाचार्योऽर्हयेत्' (३-४-२९) इति। तदा-चार्याणामपि संमतं भाति। यदि तेऽत्रार्घ्यं नाभिप्रैष्यन् स्नातकमर्घ्येषु षट्सु नान्तरभावयिष्यन् (५७७), न वा 'प्रत्यागतायार्घ्यमित्येके' (३२९) इत्यसूत्रयिष्यन् ॥ २७ ॥

**३२६. गोयुक्तं रथमालभेद्वनस्पत इति ॥ २८ ॥**

वृषभयुक्तं शकटं 'वनस्पते' इत्यादिना मन्त्रेण स्पृशे-च्चक्रे वा रथिस्थाने वा ॥ २८ ॥

**३२७. आस्थाता त इत्यारोहेत् ॥ २९ ॥**

**३२८. प्राचीं प्रयायोदीचीं वा प्रदक्षिणमावर्तयेत् ॥ ३० ॥**

स्पष्टे ॥ २९, ३० ॥

**३२९. प्रत्यागतायार्घ्यमित्येके ॥ ३१ ॥**

एके कौहलीयाः प्रत्यागतायार्घ्यं वदन्ति। तथा च गोभिलः 'उपयातायार्घ्यमिति कौहलीयाः' (३-४-३३) इति। एतन्नाचार्यसंमतम्।

एवं वेदमधीत्य कृतस्नानस्य स्नातकस्य नियमानाह 'वृद्धशीली स्यात्' (३३०) इत्यादिना। अत्रेदमवधेयम्—यद्यपि स्नातकशब्दः कृतस्नानेऽकृतविवाह एव प्रयुज्यते तथापि कृत-

विवाहे अकृतविवाहे वा व्रतस्नाते स्नातकशब्दस्य शक्तिश्शास्त्रतोऽवगम्यते। तथा च गौतमः— 'स विधिपूर्वकं स्नात्वा भार्यामधिगम्य यथोक्तान् गृहस्थधर्मान् प्रयुञ्जान इमानि व्रतान्यनुकर्षेत्स्नातकः' (९-१) इति।

अत्रैव नाजातलोम्न्योपहासमिच्छेत् (३३१) न रजस्वलया (३३३) इति सूत्रणाच्च गृहस्थोऽपि स्नातक उच्यत इति सिद्धम्।

स्नातको वक्ष्यमाणान्नियमान् यावज्जीवमनुतिष्ठन्नुत्तमां गतिं लभते। गौतमश्चाह 'ब्रह्मलोकान्न च्यवते न च्यवते' (९-७१) इति॥ ३१॥

## ३३०. वृद्धशीली स्यादत ऊर्ध्वम्॥ ३२॥

वृद्धा वयसा ज्ञानेन शीलेन च। ते खलु चिरजीवितया सम्यग्विदितधर्ममार्गा अनिष्टफलकं कर्म परिहृत्य श्रेयस्साधनेष्वेव यतन्ते। तस्मात्तच्छीलित्वं युक्तम्। वृद्धशीलरूपमिदं व्रतं समस्तव्रतसंक्षेपः॥ ३२॥

## ३३१. [1]नाजातलोम्न्योपहासमिच्छेत्॥ ३३॥

अजातयुवतिव्यञ्जनया रमणं नेच्छेत्। कृतविवाहस्यायं नियमः। अकृतविवाहस्य तत्प्राप्त्यभावात्॥ ३३॥

## ३३२. [2]नायुग्वा॥ ३४॥

अयुगूः काकवन्ध्यायास्सकृत्प्रसूतायाः कन्या। तया

1. नाजातलोम्या—क झ ट। 2. नायुग्व्या—क; नायुग्या—ग झ ञ ट ठ।

नोपहासमिच्छेत । सूत्रमिदं तद्विवाहप्रतिषेधकम् । तथा च कर्मप्रदीपः—

"अयुगूः काकवन्ध्यायां जाता तां न विवाहयेत् ।" इति ॥

**३३३. न रजस्वलया ॥ ३५ ॥**

उपहासमिच्छेदित्यनुवर्तते । कृतविवाहस्य भार्यायां रमणे नियमार्थमिदम् ॥ ३५ ॥

**३३४. न समानर्ष्या ॥ ३६ ॥**

सगोत्रां न विवाहयेदित्यर्थः ॥ ३६ ॥

**३३५. अपरया द्वारा [1]प्रपन्नद्विःपक्वपर्युषितानि नाश्नीयात् ॥**

गृहमुख्यद्वाराभिन्नेन मार्गेण गवाक्षादिना वा प्राप्तं, द्विःशृतं रात्र्यन्तरितं च पक्वं भोज्यं न भुञ्जीत ॥ ३७ ॥

**३३६. अन्यत्र शाकमांसयवपिष्टविकारेभ्यः ॥ ३८ ॥**

शाकादिविकारा न पूर्वोक्तनिषेधस्य विषयः ॥ ३८ ॥

**३३७. पायसाच्च ॥ ३९ ॥**

पयोविकाराच्च । अन्यत्रेत्यनुवर्तते ॥ ३९ ॥

**३३८. फलप्रचयनोदपानोवक्षणवर्षतिधावनोपानत्स्वयंहरणानि न कुर्यात् ॥ ४० ॥**

फलप्रचयनं स्वयं वृक्षमारुह्य फलग्रहणं, उदपानावेक्षणं कूपाधोभागावेक्षणं, वर्षतिधावनं वृष्टौ धावनं, उपानत्स्वयंहरणं स्वोपानहोः स्वयं हरणम् । एतानि न कुर्यात् ॥ ४० ॥

1. प्रपन्नः — ङ ट ।

३३९. नागन्धां स्रजं धारयेन्न चेद्धिरण्यस्रक् ॥ ४१ ॥

स्पष्टम् ॥ ४१ ॥

३४०. भद्रमिति न वृथा व्याहरेत् ॥ ४२ ॥

स्तुत्यर्थमभद्रं वस्तु भद्रमिति न ब्रूयात्। एते नियमाः स्नातकस्य ॥ ४२ ॥

अग्रे स्नातकानुष्ठेयानि श्रावणादीनि कर्माणि मासक्रमेण वक्ष्यन्ते। प्रायस्तेषामाज्यापेक्षत्वादाज्यस्य च गवाधीनत्वाद्गोपुष्टिकर्माण्याह——

३४१. पुष्टिकामो गाः प्रकालयेतेमा म इति ॥ ४३ ॥

गोपुष्टिकामः प्रातर्गोदोहनानन्तरं 'इमा मे' इत्यादिना मन्त्रेण गा गृहान्निर्गमयेत् ॥ ४३ ॥

३४२. प्रत्यागता इमा मधुमतीरिति ॥ ४४ ॥

सायं प्रत्यागता गा आलोकयन् 'इमा मधुमतीः' इत्यादिं मन्त्रं वदेत्। एतदुभयं प्रत्यहं कार्यम्। अयमेको गोपुष्टिकल्पः ॥ ४४ ॥

३४३. पुष्टिकाम एव प्रथमजातस्य वत्सस्य प्राङ्मातुः प्रलेहनाल्ललाटमुल्लिह्य निगिरेद्गवामिति ॥ ४५ ॥

बाहुल्येन गोप्रसूतिकाले वार्षिके मासचतुष्टये यो वत्सः प्रथमं जायते तं मातुः प्रलेहनात्पूर्वं जिह्वया ललाटे तूष्णीमुल्लिह्य तदङ्गगतं श्लेष्माणं 'गवां श्लेष्मासि' इत्यादिं मन्त्रं स्वाहान्तं स्मरन्निगिरेत्।

स्मर्यते च —

"ललाटलेहनादीनि गवां कर्माणि पुष्टये ।
वर्षासु त्रीणि कार्याणि भूयस्तत्प्रसवा हि ताः ॥" इति ।

**३४४. संप्रजातासु गोष्ठे निशायां विलयनं जुहुयात्सङ्ग्रहणेति ॥ ४६ ॥**

मासचतुष्टयान्ते सर्वासु गोषु प्रसूतासु अस्तमयादूर्ध्वमरुणोदयात्पूर्वं गोष्ठेऽग्निं प्रतिष्ठाप्य नित्यहोमविधिना विलयनं घृतनिष्यन्दमर्धमथितं दधि वा जुहुयात् 'संङ्ग्रहण' इत्यादिना मन्त्रेण । तथा चोक्तम् —

"दध्यर्धमथितं सर्वं तद्धि विलयनं स्मृतम् ।
घृतनिष्यन्दनं चात्र क्षिप्रमेका स्रुवाहुतिः ॥" इति ॥४६॥

**३४५. अथापरम् ॥ ४७ ॥**

गोपुष्टिकर्मेति शेषः ॥ ४७ ॥

**३४६. वत्समिथुनयोः कर्णे लक्षणं कुर्याद् भुवनमिति ॥**

**३४७. पुंसोऽग्रे ॥ ४९ ॥**

प्रतिमिथुनं प्रथमं पुंवत्सस्य पश्चात्स्त्रीवत्सस्य लक्षणं कर्णयोरग्रे किञ्चिद्द्विधा पाटनं कुर्यात् 'भुवनमसि' इत्यादिना 'सहस्रपोषाय त्वा' इत्यन्तेन मन्त्रेण । '' ...औदुम्बरेणासिना...' (३-६-५) इति गोभिलवचनाल्लोहितेनेति मन्त्रलिङ्गाच्च लक्षणकरणे ताम्रमयमसिमुपयुञ्जीत ॥४८, ४९ ॥

**३४८. लोहितेनेत्यनुमन्त्रयेत ॥ ५० ॥**

लक्षणं कृत्वा 'लोहितेन' इत्यादिं मन्त्रं जपेत् । अयमेकः कल्पः ॥ ५० ॥

**३४९. तन्तीं प्रसारितामियं तन्तीति ॥ ५१ ॥**

गोषु तृणचरणार्थं गोष्ठान्निर्गतासु प्रसारितां तन्तीं दामनीं पश्यन् 'इयं तन्ती' इत्यादिं मन्त्रं जपेत् । एतदपि प्रत्यहं कर्तव्यं 'तत्रैतान्यहरहः कृत्यानि भवान्ति निष्कालनप्रवेशने तन्तीविहरणमिति' (३-६-८) इति गोभिलोक्तेः ।

उक्तानि गोपुष्टिकर्माणि यथाशक्ति प्रयुञ्जानस्य गो-समृद्धिर्भवति ॥ ५१ ॥

इति तृतीये पटले प्रथमः खण्डः ॥



अथ श्रावणं कर्म ।

३५०. श्रावण्यां पौर्णमास्यां गृह्यादग्निमतिप्रणीय प्रतिदिशमुपलिम्पेदधिके प्रक्रमे ॥ १ ॥

श्रवणनक्षत्रयुक्तायां पौर्णमास्यां — पूर्वाह्णे पञ्चदश्यां सत्यां उपवसथ्यदिने, अन्यथा यजनीयदिने — पूर्वाह्णे गृह्याग्नेरेकदेशं गृह्याग्नेः पुरस्तात् त्रिपदाभ्यधिके चतुष्पञ्चपदव्यवहिते देशे अतिप्रणीय, तस्य अतिप्रणीताग्नेः प्रतिदिशं त्रिपदान्तरिते देशे गोमयेन चतुरश्रमुपलिम्पेत् ॥

"संसक्तपदविन्यासस्त्रिपदः प्रक्रमस्स्मृतः ।
स्मार्ते कर्मणि सर्वत्र श्रौते त्वध्वर्युनोदितः ॥"

इति प्रक्रमप्रमाणं कर्मप्रदीप उक्तम् ॥ १ ॥

ततो यवपात्रात् — पश्चाद्बलिहरणाय किञ्चिच्छेषयन् — यवमुष्टिं सकृद् गृह्णीयात् । गृह्याग्नावाहिते कपाले गृहीतं यवमुष्टिं भृज्जेत् । भृष्टान् यवान् सक्तून् कृत्वा तान् शूर्पे निदध्यात् । गृह्याग्नेरुत्तरतो दर्भस्तम्बं प्रागग्रं निधाय, सक्तुपूर्णं शूर्पं, जलपूर्णं पात्रं, चमसं दर्वीं चादाय दक्षिणपश्चिमोपलिप्तस्थानयोर्मध्येन प्रणीताग्नेस्समीपं गत्वा तस्य दक्षिणोपलिप्तस्य च मध्ये प्राङ्मुख उपविश्य (३५४) —

३५१. सकृद्गृहीतान् सक्तून् दर्व्यां कृत्वा पूर्वोपलिप्ते निनीयापो यः प्राच्यामिति बलिं निवपेत् ॥ २ ॥

दर्व्यां बलिपर्याप्तान् सक्तून् शूर्पात् सकृद् गृहीत्वा चमसे उदकं च गृहीत्वा चमसस्थं जलं किञ्चित् पूर्वोपलिप्तस्थाने

दक्षिणेन पाणिना आसिच्य 'यः प्राच्यां' इत्यादिना मन्त्रेण तत्र दर्व्या सक्तून्निदध्यात् ॥ २ ॥

३५२. निनयेदपां शेषम् ॥ ३ ॥

बलिसमीपेऽपां शेषं स्रावयेद्बलिं स्थानादचालयन् ॥

३५३. अप उपस्पृश्यैवं प्रतिदिशं यथालिङ्गम् ॥ ४ ॥

एवं उक्तप्रकारेण 'यो दक्षिणस्यां' 'यः प्रतीच्यां' 'य उदीच्यां' इत्यादिभिस्त्रिभिर्मन्त्रैर्लिङ्गानुसारेण प्रतिदिशं बलिं निवपेत् ।

अग्निदक्षिणोपलिप्तयोर्मध्ये एव दक्षिणाभिमुखो दक्षिणोपलिप्ते अग्निपश्चिमोपलिप्तयोर्मध्ये पश्चिमाभिमुखः पश्चिमोपलिप्ते, तत्रैवोत्तराभिमुख उत्तरोपलिप्ते च बलिं निवपेत् ।

दिगाभिमुख्ये प्रमाणं कर्मप्रदीपवचनम् —

"यस्यां दिशि बलिं दद्यात्तामेवाभिमुखो दिशम् ।
श्रवणाकर्मणि भवेन्न्यक्कर्म न सर्वदा ॥" इति ॥

३५४. दक्षिणपश्चिमे अन्तरेणाग्निं च सञ्चरः ॥ ५ ॥

दक्षिणपश्चिमोपलिप्तयोरग्नेश्च मध्ये सञ्चरः बलिहरणार्थं सञ्चारः । 'तमन्तरेणाहवनीयं च यजमानस्य सञ्चरो नान्येषां', 'विसंस्थिते···मैत्रावरुणस्य सञ्चरः' (द्रा. श्रौ. सू) इत्यादिषु बहुषु स्थलेषु सञ्चरशब्दस्य गमनपरत्वात् पाणिप्रसारणमिति व्याख्यानं चिन्त्यमेव ॥ ५ ॥

३५५. शूर्पेण शिष्टानग्नावोप्यातिप्रणीतादनतिप्रणीतस्याग्नेरर्धं गत्वा न्यञ्चौ पाणी कृत्वा नमः पृथिव्या इति जपेत् ॥ ६ ॥

शिष्टान् सक्तूनग्नौ ओप्य प्रास्य दक्षिणपश्चिमोपालिप्तयो-र्मध्येन बहिरागत्य अनातिप्रणीताग्नेर्गृह्याग्नेरर्धं समीपं गत्वा तस्य पश्चिमत उपविश्य न्यञ्चौ पाणी कृत्वा (३२) 'नमः पृथिव्यै' इत्यादिं मन्त्रं जपेत् ॥ ६ ॥

३५६. तत उत्थाय सोमो राजेति दर्भस्तम्बमुपस्थाय ॥

अनन्तरं तिष्ठन् 'सोमो राजा' 'यां सन्धां' इत्यादिभ्यां मन्त्राभ्यां स्तम्बस्थान् दर्भान् सर्पान् ध्यात्वा साञ्जलिबन्धं प्रणमेत् । '......सोमो राजेत्येतं मन्त्रं जपति यां सन्धां समधत्तेति च' (३-७-२१) इति गोभिलः । ततोऽग्न्युपस्थानं कुर्यात् । प्रणीतस्याग्नेः कर्मान्ते लौकिकत्वम् ॥ ७ ॥

३५७. अक्षतानादाय प्राङ्वोदङ् वा ग्रामान्निष्क्रम्य जुहुयादञ्जलिना हये राक इति चतसृभिः ॥ ८ ॥

पूर्वं शोषितानभृष्टानक्षतानादाय ग्रामाद्बहिर्गत्वा तत्र अग्निं प्रतिष्ठाप्य अक्षताञ्जलीञ्जुहुयात् 'हये राके' इत्यादिभिश्चतसृभिर्ऋग्भिः परिचरणतन्त्रेण । 'अक्षतास्तु यवाः प्रोक्ता भृष्टा धाना भवन्ति ते' इति कर्मप्रदीपोक्तेरत्राभृष्टानां यवानामेवोपयोगो युक्तः ॥ ८ ॥

३५८. प्राङुत्क्रम्य जपेद्वसुवन एधीति त्रिस्त्रिः प्रतिदिशमवान्तरदेशेषु च ॥ ९ ॥

अग्नेः पश्चिमतस्स्थितो यजमानः पुरस्ताद्गत्वा पूर्वाभिमुखो भूत्वा 'वसुवन एधि' इति त्रिर्जपेत्। एवमग्नेराग्नेय्या-द्यैशान्यन्तासु दिक्षु तत्तद्दिङ्मुखो भूत्वा त्रिस्त्रिर्मन्त्रं जपेत्। अग्न्यभिमुखो भूत्वा जपेदित्येके। ततः पूर्वस्यां दिशि प्राङ्मुखो-ऽक्षताञ्जलिं गृहीत्वा तिष्ठेत्॥ ९॥

३५९. ऊर्ध्वं प्रेक्षन् देवजनेभ्यः॥ १०॥

ऊर्ध्वं प्रेक्षमाणो 'वसुवन एधि' इति त्रिरुच्चार्य देव-जनेभ्योऽक्षताञ्जलिमूर्ध्वं क्षिपेदिति शेषः॥ १०॥

३६०. तिर्यङ्ङितरजनेभ्योऽवाङ् प्रेक्षन्॥ ११॥

अवाङ् प्रेक्षमाणः तिर्यक् दिशोऽनादेशात्प्राचीं प्रत्यञ्जलिं क्षिपेत्।

अत्र कर्मप्रदीपः—

"ऊर्ध्वं वस्विति मन्त्रेण देवेभ्योऽस्येद्यवाञ्जलिम्।
तथेतरजनेभ्यश्च प्राञ्चमन्यद्यथाविधि॥" इति॥

गोभिलश्चास्मिन् प्रकरणे—'प्राङुत्क्रम्य वसुवन एधी-त्यूर्ध्वमुदीक्षमाणो देवजनेभ्यः। तिर्यङ्ङितरजनेभ्योऽर्वाङ्वेक्ष-माणः।' (४-८-३,४.) इति॥ ११॥

३६१. प्रत्येत्यानवेक्षन्नक्षतान् प्राश्नीयात्॥ १२॥

क्षिप्तं बलिमनवलोकयन् बलिदेशादग्नेः पश्चिमभागं पुन-रागत्य वामदेव्यं गीत्वा बलिशिष्टानक्षतान् भक्षयेत्॥ १२॥

३६२. श्वोभूतेऽक्षतसक्तून् कृत्वा नवे पात्रे निधायास्तमिते बलीन् हरेदाग्रहायण्याः॥ १३॥

उत्तरदिने पूर्ववद्गृह्याग्नौ सक्तून् कृत्वा नवे पात्रे निधाय तथाविधेनान्येन पिधाय गृहान्तर्निदध्यात् '…नवे पात्रे पिधाय निदधाति' (३-७ २२) इति गोभिलवचनात् । तत्तद्दिनेषु बल्यर्थमपेक्षितान् सक्तून् तत आदायास्तमिते बलीन् हरेत्; न प्रतिदिनं सक्तवः कर्तव्याः । एवं बलिहरणं मार्गशीर्षपौर्णमासीपर्यन्तम् । द्वितीयादिदिनेषु सक्तुबलिहरणमात्रं कुर्यात् । शिष्टावपनादि (३५५–३६१) सर्वं निवर्तते । अत्र कर्मप्रदीपः—

"… …………न्यञ्चकर्म न सर्वदा ।

बलिशेषस्य हवनमग्निप्रणयनं तथा ।
प्रत्यहं न भवेयातामुल्मुकं तु भवेत्सदा ॥" इति ।

प्रतिदिनं लक्षणपूर्वकं अग्निप्रणयनं न कर्तव्यम् । गृह्याग्नेरुल्मुकमेकं प्रणीताग्निस्थाने निधाय तस्य चतसृषु दिक्षु उपलिप्तस्थानेषु पूर्ववद्बलिहरणं कुर्यादित्यर्थः । बलिहरणान्ते वामदेव्यं गायेत् ।

'अस्तमिते' इति शब्देन सायंहोमानन्तरं बलिहरणमित्येके । '… सायं प्राग्घोमात् …' (३-७-२३) इति गोभिलः । निर्णये शिष्टाः प्रमाणम् ॥ १३ ॥

अथोपाकरणम् ।

## ३६३. प्रौष्ठपदीं हस्तेनाध्यायानुपाकुर्युः ॥ १४ ॥

प्रौष्ठपदमासस्य तिथिः प्रौष्ठपदी तस्यां हस्तनक्षत्रे छन्दोगा अधीयन्त इत्यध्याया वेदभागास्तानुपाकुर्युः । उपाकरणं चाचार्येभ्यश्श्रुतानां वेदभागानामध्ययनोपक्रमरूपम् । इदं च

प्रतिसंवत्सरं कर्तव्यं येनाधीतानां वेदभागानां यातयामतानिवृत्तिः अध्येष्यमाणानां वीर्यवत्त्वसिद्धिश्च भवति । तथा च कात्यायनः—

"प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवद् द्विजैः ।
क्रियते छन्दसां तेन पुनराप्यायनं भवेत ॥" इति ॥

अपराह्णे स्नात्वा दारुमये पीठे स्थापितान् सप्त दर्भकूर्चान् ऋषीन् ध्यात्वा षोडशोपचारसहितं पूजयेदाचार्यः । अथ तर्पयेयुस्सर्वे वंशब्राह्मणोक्तानृष्यादीन् देवान् पितॄंश्च । पौष्यामुत्सर्गश्चैवमेवाध्ययनहोमवर्जं कर्तव्यः,

"उपाकर्मणि चोत्सर्गे यथाकालं समेत्य च ।
ऋषीन् दर्भमयान् कृत्वा पूजयेत्तर्पयेत्ततः ॥"

इति वचनात् ॥ १४ ॥

## ३६४. श्रावणीमित्येके ॥ १५ ॥

श्रावणीं श्रावणमासस्य कस्यांचित्तिथौ, हस्तेनाध्यायानुपाकुर्युरित्यनुवर्तते । प्रौष्ठपदहस्तस्सङ्क्रमणदुष्टश्चेत् श्रावणहस्ते उपाकुर्युरिति गोभिलसूत्रभाष्ये तर्कालङ्कारः । रुद्रस्कन्दः श्रावणीमिति श्रावणपौर्णमासीमभिप्रैति ॥ १५ ॥

## ३६५. हुत्वोपनयनवत्सावित्रीमनुवाचयेत् ॥ १६ ॥

आचार्योऽग्निमुपसमाधाय वैरूपाक्षजपान्तं कृत्वा अङ्गाहुतीर्व्याहृतिभिर्व्यस्ताभिर्जुहुयात । ततो यज्ञोपवीतादीन् शिष्यैर्यथार्हं धारयित्वा स्वयं च यज्ञोपवीतं धृत्वा उपनयने इव—पच्छः अर्धर्चशस्सर्वामिति क्रमेण—(२५२) सावित्रीमनुवाचये-

च्छिष्यान् व्याहृतीश्च प्रणवान्ताः। 'व्याहृतिभिर्हुत्वा शिष्याणां सावित्र्यनुवचनं यथोपनयने' (३-३-२) इति गोभिलः। ततो व्याहृतिसामानि गायत्रं चानुवाचयेत ॥ १६ ॥

३६६. सोमं राजानं पर्वादींश्च ॥ १७ ॥

'सोमं राजानं' इत्यादिमृचं साम च, 'अग्न आयाहि' 'तद्वो गाय' 'उच्चा' 'इन्द्रज्येष्ठं' 'उपास्मै' इत्यादीः ऋचः, आग्नेयादिमहानाम्निकान्तानां पर्वणामाद्यानि सामानि ऊहरहस्ययोः प्रतिपर्व आद्यास्तोत्रीयाश्चानुवाचयेत। ब्राह्मणसूत्रादीनामादिवाक्यानि चानुवाचयन्ति ॥

ततो होमसमापनम्। ऋषीणामुद्वासनं तु अनुपठनानन्तरमेव ॥ १७ ॥

३६७. धाना दधि च प्राश्नीयुरभिरूपाभ्याम् ॥ १८ ॥

'धानावन्तं' 'दधिक्राव्णः' इत्यादिभ्यां क्रमेण। ऋग्भ्यामिति भट्टनारायणः। दाक्षिणात्यास्सामभ्यां प्राश्नन्ति ॥ १८ ॥

अथानुपठनम्।

३६८. श्वोभूते प्राधीयीरञ्छिष्येभ्यः ॥ १९ ॥

परेद्युः पूर्वाह्णे आचार्याश्शिष्यानध्यापयेयुः ॥ १९ ॥

३६९. अनुवाक्याः कुर्युः ऋगादिभिः प्रस्तावैश्च ॥ २० ॥

अनूच्यन्त इत्यनुवाक्या अनुपठनविषया ऋचः कुर्युः। प्रस्तावैरिति वचनात्सामानि च गृह्यन्ते। ऋचामादिपादान् साम्नां प्रस्तावांश्च आचार्याश्शिष्याननुवाचयेयुः ॥ २० ॥

३७०. अनुगानमरहस्यानाम् ॥ २१ ॥

आरण्यगेयरहस्ययोरनुगानं पौषीपर्यन्तं निवर्तते । अनुपठने उपाकर्मणीव आदौ सावित्रीं व्याहृतीर्व्याहृतिसामानि गायत्रं 'सोमं राजानं' इत्यादिमृचं साम चानुवाच्य आग्नेयैन्द्रपावमानपर्वणामाद्यर्चानामादिपादान् 'उपास्मै गायता नरः' इति ऋक्पादं, आग्नेयैन्द्रपावमानपर्वणां ऊहस्य सप्तपर्वणां चाद्यसाम्नां प्रस्तावाननुवाचयेयुः । उपनिषद्वर्जं ब्राह्मणादीनां चादिवाक्यान्यनुवाचयन्ति ।

ततः ऋषीनुद्वास्य रक्षां 'रक्षत नो रक्षितारो गोपायत गोपायितारः' इति निधनं गायन्तो बध्नीयुः ॥ २१ ॥

३७१. विद्युत्स्तनयित्नुवर्जमर्धपञ्चमान् मासानधीत्य पौषीमुत्सर्गः ॥ २२ ॥

सार्धचतुरो मासानधीत्य पौष्यामुत्सर्गः कार्यः । उपाकर्मप्रभृत्युत्सर्गपर्यन्तं यदि विद्युत्स्तनयित्नू प्रातस्सायंसन्ध्ययोस्स्यातां तदा क्रमेण दिवा नक्तं च नाध्येतव्यम । तथा च मनुः—

"प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिस्वने ।
सज्योतिस्स्यादनध्यायः ………. ॥" इति ॥

एवंविधविशिष्टनियमसहकृतस्य अध्ययनस्य समापनरूपं कर्म उत्सर्गः । उत्सर्गकाले ऋषिपूजनादिकं कर्तव्यमिति पूर्वमेव (३६३) उक्तम् । अत्र तर्पणानन्तरं ऋषीनुद्वास्य कूर्चान प्लवसाम्ना जले प्लावयेयुः । पौष्यामुत्सर्गाकरणे समनन्तरप्रौष्ठपदहस्ते प्रातरुत्सर्गं कृत्वा अपराह्णे उपाकर्म कुर्यात् ॥ २२ ॥

३७२. तत ऊर्ध्वमभ्रानध्यायः ॥ २३ ॥

उत्सर्गादूर्ध्वं अभ्रदर्शने आकालिकोऽनध्यायः । निमित्तकालमारभ्य परेद्युर्यावत्स एव कालस्तावदनध्याय इत्यर्थः । मनुश्चाह 'अनृतौ चाभ्रदर्शने' इति । तद्व्याख्यानावसरे 'वर्षर्तुव्यतिरिक्ते चर्तौ अभ्रसंप्लवे आकालिकमनध्यायं विद्यात' इति वैद्यनाथदीक्षिताः । 'सर्वरूपेऽभ्रदर्शने' इति गृह्यान्तरवचनात वात्वभ्रविद्युत्स्तनितवर्षाख्यपञ्चरूपवन्मेघदर्शनस्यैवानध्यायनिमित्तत्वम् ॥ २३ ॥

## ३७३. विद्युत्स्तनयित्नुपृषितेषु च ॥ २४ ॥

सन्ध्यायां तटिन्मेघशब्दवर्षेष्वेकस्य द्वयोर्वा स्थितावाकालिकोऽनध्यायः । 'स्तनयित्नुवर्षविद्युतश्च प्रादुष्कृताग्निषु' (१६-२३) इति गौतमः ॥ २४ ॥

## ३७४. त्रिसन्निपाते त्रिसन्ध्यम् ॥ २५ ॥

समुच्चये कालत्रयमनध्यायः ॥ २५ ॥

## ३७५. [1]अष्टकाममावास्यां चातुर्मासीः ॥ २६ ॥

अष्टकाममावास्यामिति जात्येकवचनम् । अष्टका अष्टम्यः न तु आग्रहायण्युत्तरभाविन्यस्तिस्रः कृष्णाष्टम्यः तासु त्रिरात्रानध्ययनस्य स्मरणात । तथा च गौतमः—'तिस्रोऽष्टकास्त्रिरात्रम्' (१६-३८) इति । मनुस्मृतौ 'पौर्णमास्यष्टकासु च' इत्यत्र अष्टकाशब्दोऽष्टमीपर एवेति कुल्लूकभट्टः । अमावास्याः प्रसिद्धाः । चातुर्मास्यः चातुर्मास्यद्वितीयाः 'चातुर्मास्यद्वितीयासु वेदाध्यायं

---

1. अष्टकाममावास्यायाम्—क ख ङ झ ट ठ ।

विवर्जयेत्' इति हारीतवचनात्। चातुर्मास्यद्वितीयाश्चाह गर्गः—

"शुचावूर्जतपस्ये च या द्वितीया विधुक्षये ।
चातुर्मास्यद्वितीयास्ताः प्रवदन्ति मनीषिणः ॥" इति ।

एवं च अष्टमीषु, अमावास्यासु, आषाढकार्त्तिकफाल्गुन-कृष्णद्वितीयासु च नाधीयीरन्निति सिद्धम् । द्वितीया अत्यन्त-संयोगे । अहोरात्रानध्ययनहेतव एताः । अयमध्ययननिषेध उत्सर्गात्प्राक् च, चातुर्मासीग्रहणात् ॥ २६ ॥

३७६. उदगयने च पक्षिणीं [2]रात्रीम् ॥ २७ ॥

सूर्यस्य मकरराशिसङ्क्रान्तौ पक्षिणीं पक्षतुल्यामागामिवर्त-मानाहर्युक्तां रात्रीं नाधीयीरन्। दिवा चेत्सङ्क्रमणं तदहः उभयतश्च रात्रिमनध्याय इति रुद्रस्कन्दः । सन्निहितां रात्रि-मुभयतोऽहर्युक्तामिति केचित् ॥ २७ ॥

३७७. सब्रह्मचारिणि च प्रेते ॥ २८ ॥

सब्रह्मचारिणि सतीर्थ्ये । पक्षिणीमित्यनुवर्तते ॥ २८ ॥

३७८. उल्कापाते भूमिचले ज्योतिषोश्चोपसर्ग एतेष्वाका-लिकं विद्यात् ॥ २९ ॥

ज्योतिषोस्सोमसूर्ययोरुपसर्गे ग्रहणे ॥ २९ ॥

३७९. कार्ष्ने तु कठकौथुमाः ॥ ३० ॥

कठाः कौथुमाश्च कर्षूरकं वर्षमनध्यायनिमित्तं मन्यन्ते न क्षुद्रवर्षमात्रम् ॥

2. रात्रिम् – ख ङ ।

अनध्यायविषये स्मृत्यन्तरवचनानि —

"प्रतिपत्सु चतुर्दश्यामष्टम्यां पर्वणोर्द्वयोः ।
श्वोऽनध्यायेऽद्य शर्वर्यां नाधीयीत कदाचन ॥"

(हारीतः)

"अयने विषुवे चैव शयने बोधने हरेः ।
अनध्यायस्तु कर्तव्यो मन्वादिषु युगादिषु ॥" (नारदः)

"उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम् ।"

"प्रदोषे तु त्रयोदश्यां नाध्येयं प्रतिपत्सु च ।" (मनुः)

इति ॥ ३० ॥

इति तृतीये पटले द्वितीयः खण्डः ॥



अथाश्वयुजीकर्म ।

३८०. आश्वयुजीं रुद्राय पायसः ॥ १ ॥

आश्वयुज्यां पौर्णमास्यां रुद्राय पायसश्चरुः कर्तव्यः। 'रुद्राय त्वा जुष्टं निर्वपामि' इति निर्वापः। चरुश्रपणात्पूर्वं कर्मारम्भकाले अग्नेरीशानदिशि पृषातकं सादयितव्यम्।

तथा च कर्मप्रदीपे —

"पयो यदाज्यसंयुक्तं तत्पृषातकमुच्यते।
दध्येके तदुपासाद्य कर्तव्यः पायसश्चरुः॥" इति॥

३८१. मा नस्तोक इति जुहुयात् ॥ २ ॥

चरुहोमोऽयम्। 'रुद्रायेदम्' इति त्यागः॥ २॥

३८२. पयस्यवनयेदाज्यं तत् पृषातकम् ॥ ३ ॥

आज्यमिश्रं क्षीरं पृषातकमुच्यते ॥ ३ ॥

३८३. तेनाभ्यागता गा उक्षेदानो मित्रावरुणेति ॥ ४ ॥

अभ्यागताः सायं गृहमागताः ॥ ४ ॥

३८४. वत्सांश्च मातृभिस्सह वासयेत्तां रात्रिम् ॥ ५ ॥

स्पष्टम्। एतदाश्वयुजीकर्म कदाचित् पौर्णमासस्थालीपाकेन नवयज्ञेन च वा सह कर्तव्यतां प्राप्नुयात्। तदा समानतन्त्रेण कर्तव्यम। समानतन्त्रेण करणे इतिकर्तव्यतायां विशेषमाह गोभिलः— 'गणेष्वेकं परिसमूहनमिध्मो बर्हिः पर्युक्षण-

माज्यभागौ च । सर्वेभ्यस्समवदाय सकृदेव सौविष्टकृतं जुहोति’ (१-८-१६,१७) इति ॥ ५ ॥

अथ नवयज्ञः ।

३८५. नवयज्ञे पायस ऐन्द्राग्नः ॥ ६ ॥

नवेन व्रीह्यादिना यो यज्ञः क्रियते स नवयज्ञः । स च शरदि व्रीहिभिः वसन्ते यवैश्च पर्वणि कर्तव्यः । अत्र श्रुतिः— ‘गृहमेधी व्रीहियवाभ्यां शरद्वसन्तयोर्यजेत’ इति । स्मृतिश्च— ‘शरद्याग्रयणं नाम पर्वणि स्यात्तदुच्यते ।’ (शौनकः) इति । शरत् आश्वयुजकार्त्तिकमासौ । वसन्तः चैत्रवैशाखमासौ । नवयज्ञे इन्द्राग्निभ्यां पायसश्चरुः श्रपयितव्यः । ‘इन्द्राग्निभ्यां स्वाहा’ इति चरुहोमः ॥ ६ ॥

३८६. शतायुधायेति चतसृभिराज्यं जुहुयादुपरिष्टात् ॥

प्रधानाहुतेरुपरिष्टात ‘शतायुधाय’ ‘ये चत्वारः’ ‘ग्रीष्मो हेमन्तः’ ‘इद्वत्सराय’ इत्यादिभिश्चतुर्भिर्मन्त्रैराज्यं जुहुयात् ॥

३८७. अग्निः प्राश्नात्विति च ॥ ८ ॥

आज्यं जुहुयादित्यनुवर्तते । स्विष्टकृदादि तन्त्रं समापयेत। हविश्शेषं ब्रह्मणे न दद्यात् ॥ ८ ॥

३८८. तस्य शेषं प्राश्नीयुर्यावन्त उपेताः ॥ ९ ॥

स्वयं वक्ष्यमाणप्रकारेण हविश्शेषे किञ्चित् प्राश्य तत्रोपेतान् समागतान् ब्राह्मणानपि प्राशयेत् ॥ ९ ॥

३८९. उपस्तीर्यापो द्विर्नवस्यावद्येत् ॥ १० ॥

दक्षिणपाणौ वामपाणिना जलमुपस्तीर्य द्विर्हविषोऽवद्ये-दिति भट्टनारायणः। भोजनार्थे पात्रे इति रुद्रस्कन्दः ॥ १० ॥

३९०. त्रिर्भृगूणाम् ॥ ११ ॥

अवदाने विशेषः ॥ ११ ॥

३९१. अपां चोपरिष्टात् ॥ १२ ॥

अवत्तस्य हविष उपरिष्टात् अपां अवद्येत् अद्भिः अभिघारयेदित्यर्थः। एवं चतुरवत्तित्वं पञ्चावत्तित्वं च सिद्धयति ॥

३९२. भद्रान्न इत्यसंखाद्य प्रगिरेत्त्रिस्त्रिः ॥ १३ ॥

दक्षिणपाणिस्थं जलेनोपस्तृताभिघारितं हुतशेषं 'भद्रान्नः' इत्यादिना मन्त्रेणासंखाद्य त्रिर्निगिरेत्। मन्त्रस्य त्रिरावृत्तिः। ब्राह्मणानामपि त्रिर्निगरणार्थं वीप्सा ॥ १३ ॥

३९३. एतमुत्यमिति वा यवानाम् ॥ १४ ॥

यवाग्रयणे 'भद्रान्नः' इत्यादिना 'एतमुत्यं' इत्यादिना वा मन्त्रेण प्रगिरेत् ॥ १४ ॥

३९४. अमोऽसीति मुख्यान् प्राणानभिमृशेत् ॥ १५ ॥

मुख्यान् प्राणान् आस्यचक्षुर्नासिकाश्रोत्रम्।

अयं नवयज्ञो गृहिणा अवश्यं कर्तव्यः, अकरणे प्रायश्चित्त-स्मरणात्।

तथा च कात्यायनः —

"अनिष्ट्वा नवयज्ञेन नवान्नं योऽत्त्यकामतः ।
वैश्वानरश्चरुस्तस्य प्रायश्चित्तं विधीयते ॥" इति ॥

अकामतोऽकुर्वन् प्रायश्चित्तीयते चेद्वज्ञया अकुर्वन् पापीयान् भवतीति किमु वक्तव्यम्? ॥ १५ ॥

अथाग्रहायणीकर्म ।

**३९५. आग्रहायणं कर्म श्रावणेन व्याख्यातम् ॥ १६ ॥**

मार्गशीर्षपौर्णमासी आग्रहायणी तस्यामनुष्ठेयं बलिहरण-रूपं कर्म आग्रहायणम् । तत् श्रावणेन (३५०) व्याख्यातम् । अयमर्थः — श्रावण्यामिव आग्रहायण्यामपि पूर्वाह्णे बलिहरणं भर्जनादिप्राशनान्तं कर्तव्यम् ॥ १६ ॥

किन्तु

**३९६. नमः पृथिव्या इति न जपेत् ॥ १७ ॥**

न्यञ्चौ पाणी कृत्वा जप्यः (३५५) 'नमः पृथिव्यै' इत्यादिर्मन्त्रो निवर्तते ॥ १७ ॥

आग्रहायण्यां प्रदोषे कर्तव्यमाह —

**३९७. प्रदोषे पायसस्य जुहुयात् प्रथमेति ॥ १८ ॥**

रात्र्यामाद्ययामे गृह्याग्नौ पायसचरुं श्रपयेत् । निर्वापश्च 'आग्रहायण्यै त्वा जुष्टं निर्वपामि' इति, आग्रहायणीनाम्नः (४११) अस्य कर्मणोऽनिर्दिष्टदेवताकत्वात् 'तदादेशमनाज्ञाते' (४३९) इति न्यायात् । गोभिलसूत्रभाष्यकृतां भट्टादीनामप्येवमेव

अभिप्रायः । 'प्रथमा ह व्युवास सा' इत्यादिना प्रधानहोमः । 'आग्रहायण्या इदम्' इति त्यागः ॥ १८ ॥

स्विष्टकृदादिप्रह्मोद्वासनान्तं कृत्वा

३९८. न्यञ्चौ पाणी कृत्वा प्रतिक्षत्र इति जपेत् ॥ १९ ॥

स्पष्टम् ॥ १९ ॥

३९९. पश्चादग्नेः स्वस्तरमुदगग्रैः तृणैरुदक्प्रवणमास्तीर्य तस्मिन्नास्तरणे गृहपतिरास्ते ॥ २० ॥

तृणशब्देन दर्भभिन्ना एरकादयो गृह्यन्ते । उत्तरतो निम्नं यथा भवति तथा उदगग्रतृणैर्निर्मिते आस्तरणे दक्षिणतः प्रथमं गृहपतिरुपविशेत् 'दक्षिणतो गृहपतिरुपविशति' (३-९-१३) इति गोभिलवचनात् ॥ २० ॥

तस्योत्तरतः

४००. अनुपूर्वमितरेऽनन्तराः ॥ २१ ॥

अनन्तरा अव्यवहिता इतरेऽनुजादयः पुमांसः अनुपूर्वं वयःक्रमेण उपविशेयुः ॥ २१ ॥

तेषामप्युत्तरतः

४०१. [1]भार्या पुत्राश्च ॥ २२ ॥

भार्या गृहपतिभार्या । भार्याः इति पाठे गृहपतेरनुजानां च भार्या इत्यर्थः । तदनन्तरं पुत्राः ॥ २२ ॥

1. भार्याः — ग ।

४०२. न्यञ्चौ पाणी कृत्वा स्योनेति गृहपतिर्जपेत् ॥

स्पष्टम् ॥ २३ ॥

४०३. समाप्तायां दक्षिणैः पार्श्वैस्संविशेयुस्त्रिस्त्रिरभ्यात्ममावृत्य ॥ २४ ॥

'स्योना पृथिवि' इत्यारम्भायामृचि समाप्तायां प्राक्शिरसो दक्षिणैः पार्श्वैः उत्तराभिमुखं शयीरन् । शयनानन्तरमुत्थाय आत्माभिमुखमावृत्य प्राङ्मुखोपवेशदशां प्राप्नुयुः । अप्रादक्षिण्येन—पृष्ठतः—आवर्तनस्य निषेधार्थमभ्यात्ममित्युक्तम् । एवं शयनं प्रत्येकं त्रिवारम् । द्वितीयतृतीयशयनयोः न मन्त्रजपः ॥ २४ ॥

४०४. स्वस्त्ययनानि कुर्युः ॥ २५ ॥

अप्रतिरथारिष्टवर्गादीनि जपेयुः ; सामर्थ्यात् पुमांस एव ॥

४०५. ततो यथार्थं स्यात् ॥ २६ ॥

शान्त्यर्थं वामदेव्यगानं ब्राह्मणभोजनादिकं च भवेत् ॥

अथाष्टकाः ।

४०६. ऊर्ध्वमाग्रहायण्यास्तिस्रस्तामिस्राष्टम्योऽष्टका इत्याचक्षते ॥ २७ ॥

आग्रहायण्या ऊर्ध्वं तिस्रः कृष्णाष्टमीरष्टका इत्याचक्षते ॥

४०७. तासु स्थालीपाकाः ॥ २८ ॥

तासु तिसृष्वपि प्रत्येकमोदनचर्वर्थं स्थालीपाकः कर्तव्यः ॥

४०८. अष्टौ चापूपाः प्रथमायाम् ॥ २९ ॥

प्रथमायामष्टकायां व्यञ्जनार्थमपूपाः कार्याः ॥ २९ ॥

४०९. तानपरिवर्तयन् कपाले श्रपयेत् ॥ ३० ॥

तानपूपान् कपाले इति जात्येकवचनं कपालेषु—' पृथक् कपालान् कुर्वीत अपूपानष्टकाविधौ ' इति कर्मप्रदीपवचनात्—अपरिवर्तयन् श्रपयेत् । अपूपाश्च करतलप्रमाणाः कर्तव्याः 'त्रैयम्बकप्रमाणान्' इति गोभिलवचनात् । 'त्रैयम्बकं करतलम्' इति कर्मप्रदीपः । कपालाश्च हस्तेनैव निर्मातव्याः 'आसुरं चक्रघटितम्' इति चक्रघटितस्य निन्द्यत्वात् ॥

अयं प्रयोगक्रमः—

गृह्याग्निस्थापनं, ब्रह्मोपवेशनं, 'अष्टकायै त्वा...' इति निर्वापः, निरुप्ततण्डुलैकदेशेनौदनार्थं स्थालीपाकः, शिष्टान् तण्डुलान् पिष्टीकृत्याष्टसु कपालेषु अपूपान् कृत्वा स्थालीपाकस्योत्तरतः श्रपणं, चरोरपूपानां चावदानक्रमेणावदाय अष्टकायै स्वाहेति होमः । शेषं पौर्णमासस्थालीपाकवत् ॥ ३० ॥

४१०. उत्तमायां शाकमन्वाहार्ये ॥ ३१ ॥

उत्तमायामष्टकायां अन्वाहार्ये व्यञ्जनार्थे श्रपणे शाकं—प्रथमायामपूपवत्—उपयुज्यत इति शेषः । तथा च जैमिनिः—'शाकाष्टका मांसाष्टका अपूपाष्टकेति तत्र शाकमांसापूपानि हवींषि ' इति ।

"आद्यापूपैस्सदा कार्या मांसैरन्या सदा भवेत् ।
शाकैः कार्या तृतीया स्यादेष द्रव्यगतो विधिः ॥"

इति वायुब्रह्माण्डपुराणयोश्च वचनम् ॥ ३१ ॥

४११. अष्टकायै स्वाहेति जुहुयात् ॥ १२ ॥

प्रथमोत्तमयोः अष्टकयोः व्यञ्जनसहितचरुहोममन्त्रोऽयम् मध्यमायां 'औलूखलाः' इत्यादीनां विधानात् (४३५)।

अष्टकायां क्रियमाणं कर्माप्यष्टकेत्युच्यते। सा गृहिणा अवश्यमनुष्ठेया 'अष्टका पार्वणः श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्थाः' (८-१६) इति गौतमेन नित्यत्वेन पठितत्वात्, नित्यप्रकरणस्थत्वाच्च। पुष्टिकरा च '... पुष्टिकर्मा' इति (३-१०-१) गोभिलोक्तेः ॥ १२ ॥

इति तृतीये पटले तृतीयः खण्डः ॥



**४१२. मध्यमायां गौः ॥ १ ॥**

क्रमत उत्तमाष्टकायाः पूर्वं वर्णनीयां मध्यमाष्टकामुत्तमाष्टकानन्तरं वर्णयति सूचीकटाहन्यायेन, मध्यमाष्टकाया मांसरूपविशेषद्रव्यसाध्यत्वादन्वष्टक्यानुगतत्वाच्च ।

प्रथमायामपूपवदुत्तमायां शाकवद्व्यञ्जनार्थं मध्यमायां गौरालब्धव्या ॥ १ ॥

उपलेपनाद्याज्यसंस्कारान्तं निर्वापश्रपणवर्जं कृत्वा

**४१३. तां पुरस्तादग्नेः प्रत्यङ्मुखीमवस्थाप्य जुहुयाद् यत्पशव इति ॥ २ ॥**

स्पष्टम् ॥ २ ॥

**४१४. हुत्वा चानुमन्त्रयेतानु त्वेति ॥ ३ ॥**

'यत्पशवः' इत्यादिना मन्त्रेणाज्यं हुत्वा अनामिकया गां स्पृशन् 'अनु त्वा' इत्यादिना मन्त्रेणानुमन्त्रयेत । 'स्पृशन्ननामिकाग्रेण' इति कर्मप्रदीपः ॥ ३ ॥

**४१५. यवमतीभिरद्भिः प्रोक्षेदष्टकायै त्वा जुष्टं प्रोक्षामीति ॥ ४ ॥**

स्पष्टम् ॥ ४ ॥

**४१६. प्रोक्ष्योल्मुकेन परिहृत्य प्रोक्षणीः पाययेत् ॥ ५ ॥**

प्रोक्षणानन्तरं गृह्याग्नेरुल्मुकेन गां प्रदक्षिणं परिवार्योल्मुकमग्नौ प्रक्षिपेत् । परिहरणे 'परिवाजपतिः' इत्यारभ्यामृचं विनियुङ्क्ते भट्टनारायणः । प्रोक्षणशिष्टा अपो गां पाययेत् ॥ ५ ॥

**४१७. उदङ्ङुत्सृप्य [1]प्रत्यक्शिरसमुदक्पादीं संज्ञपयेत् ॥**

उदङ्ङुत्सृप्य उत्तरस्यां दिशि नीत्वा । संज्ञपयेच्छमिता ॥

**४१८. संज्ञप्तायां जुहुयाद्यत्पशुरिति ॥ ७ ॥**

गृहपतिरिति शेषः ॥ ७ ॥

**४१९. तस्याः पत्नी स्रोतांसि प्रक्षाळयेत् ॥ ८ ॥**

"सप्त तावन्मूर्धन्यानि तथा स्तनचतुष्टयम् ।
नाभिश्श्रोणिरपानं च गोस्स्रोतांसि चतुर्दश ॥"

इति कर्मप्रदीपः । तानि गृहपतिपत्नी प्रक्षाळयेत् ॥ ८ ॥

**४२०. पवित्रे अन्तर्धायोत्कृत्य वपामुद्धारयेत् ॥ ९ ॥**

नाभेरग्रतोऽनुलोममुत्कृत्य वपामुद्धारयेत् शमितेति शेषः ॥

**४२१. यज्ञियस्य वृक्षस्य विशाखाशाखाभ्यां परिगृह्याग्नौ श्रपयेत् ॥ १० ॥**

त्रिशाखाशाखाभ्यां वपाश्रपण्या । श्रपयेद् गृहपतिः ॥

**४२२. प्रसृतायां विशसेत् ॥ ११ ॥**

वपायां प्रसृतायां विस्रावीभूतायां पक्वायामित्यर्थः । शमिता पशुं विशसेत् ॥ ११ ॥

**४२३. उक्तमुपस्तरणाभिघारणं यथा स्विष्टकृतः ॥ १२ ॥**

स्विष्टकृतो यथा उपस्तरणाभिघारणे उक्ते (१५५) तथा अत्रापि वपाविषये भवतः ॥ १२ ॥

---

1. प्रत्यक्शिरसीं—क ख ञ ट ठ ।

**४२४. अष्टकायै स्वाहेति जुहुयात् ॥ १३ ॥**

वपामिति शेषः ॥ १३ ॥

**४२५. सर्वाङ्गेभ्योऽवदानान्युद्धारयेत् ॥ १४ ॥**

अवदानानि मांसखण्डानि क्षुरेणोद्धारयेत्। अङ्गानि चोक्तानि कात्यायनेन —

"हृज्जिह्वाक्रोडसक्थीनि यकृद्वृक्कौ गुदं स्तनाः।
श्रोणिः स्कन्धसटा पार्श्वे पश्वङ्गानि प्रचक्षते ॥" इति।

पार्श्ववृक्कसक्थ्नां द्वित्वाच्चतुर्दशाङ्गानि ॥ १४ ॥

**४२६. न सव्यात्सक्थ्नः ॥ १५ ॥**

**४२७. न क्लोम्नः ॥ १६ ॥**

'सर्वाङ्गेभ्यः' (४२५) इत्यस्यापवादौ। एवं च द्वादश अवदानानि सिद्ध्यन्ति ॥ १५, १६ ॥

**४२८. सव्यं सक्थि निधाय ॥ १७ ॥**

सव्यं सक्थि उत्कृत्य पृथक् निदध्यात् अन्वष्टक्यार्थम् ॥

उद्धृतानि द्वादश मांसखण्डानि, तण्डुलान्, कंसपात्रं, क्षुरं, प्लक्षशाखाः, स्थालीद्वयं, मेक्षणद्वयं च अग्नेरुत्तरतः सादयित्वा

**४२९. पृथङ्मेक्षणाभ्यामवदानानि स्थालीपाकं च श्रपयित्वा ॥ १८ ॥**

स्थालीपाकार्थं 'अष्टकायै त्वा जुष्टं निर्वपामि' इति निर्वापः। अवदानानां पृथक् श्रपणम्। शृतं चरुद्वयं अभिघार्य उदगुद्वास्य प्रत्यभिघारयेत ॥ १८ ॥

एवं श्रपणे सिद्धे

**४३०. कंसे रसं प्रस्राव्य ॥ १९ ॥**

मांसावदानरसम् ॥ १९ ॥

**४३१. प्लक्षशाखास्ववदानानि कृत्वा ॥ २० ॥**

द्वादश अवदानानि निधाय ॥ २० ॥

**४३२. एकैकस्मात्कंसेऽवद्येत् ॥ २१ ॥**

एकैकस्मादङ्गावदानादवदानधर्मेण (१५०, १५१, १५२) अवद्येत अवदाय निदध्यात रसवति कंसे ॥ २१ ॥

**४३३. स्थालीपाकाच्च ॥ २२ ॥**

ओदनचरोश्च अवदानधर्मेण अवदाय कंसे निदध्यात ॥

पर्युक्षणाद्याज्यभागान्तं कृत्वा —

**४३४. चतुर्गृहीतमष्टगृहीतं [1] वात्र जुहुयादग्नाविति ॥**

द्रव्यानादेशात (१७७) देवताभेदाच्च आज्यं चतुर्गृहीतमष्टगृहीतं वा गृहीत्वा जुहुयात 'अग्नावग्निः' इत्यादिना मन्त्रेण। गोभिलश्च 'चतुर्गृहीतमाज्यं गृहीत्वाष्टर्चैप्रथमया जुहुयादग्नावग्निरेति' (४-१-१३) इति। अग्नये इदमिति त्यागः ॥ २३ ॥

---

1 (वाज्यं, वात्रं- Mss)— ग

कंसे यन्निहितं तस्योपयोगमाह—

४३५. कंसात्पराभिर्द्वाभ्यां द्वाभ्यामेकैकामाहुतिम् ॥२४॥

कंसस्थं मांसमिश्रं चरुं त्रीन भागान् कृत्वा पराभिष्षड्भिः 'औलूखलाः' इत्यादिभिः ऋग्भिः जुहुयात् द्वाभ्यां द्वाभ्यां ऋग्भ्यां एकैकं भागम् । अष्टकाया इदमिति त्यागः । एवं च प्रथमाया ऋच आज्यहोमे परासां षण्णां चरुहोमत्रये च विनियोग उक्तः । तथा च गोभिलः— 'सन्नीतात्तृतीयमात्रमवदाय द्वितीयातृतीयाभ्यां जुहोति । उत्तरस्यां स्वाहाकारं दधाति । एवमेवात्तरे चतुर्थी-पञ्चमीभ्यां षष्ठीसप्तमीभ्यां च ।' (४-१-१४–१६) इति ॥२४॥

स्विष्टकृदवदानरीत्या (१५५) मांसावदानेभ्यश्चरोश्चावदाय

४३६. सौविष्टकृतीमष्टम्या ॥ २५ ॥

'अग्निर्मं नः' इत्यारम्भया अष्टम्या ऋचा स्विष्टकृद्धोमः कर्तव्यः । न त्वग्नये स्विष्टकृते स्वाहेति । अग्नये स्विष्टकृते इद-मिति त्यागः ॥ २५ ॥

प्रसङ्गात् पित्र्ये दैवत्ये चालम्भे वपाहोममन्त्रमाह—

४३७. वह वपामिति पित्र्ये वपाहोमः ॥ २६ ॥

पित्रर्थं पश्वालम्भे 'वह वपां' इत्यादिना मन्त्रेण वपा-होमः ॥ २६ ॥

४३८. जातवेद इति दैवत्ये ॥ २७ ॥

दैवे आलम्भे यथा वास्तुकर्मणि (५२८) ॥ २७ ॥

४३९. तदादेशमनाज्ञाते यथाष्टकाया इति ॥ २८ ॥

इदं कर्म पित्र्यं दैवत्यं वेत्यज्ञाते अनिर्दिष्टदेवताके कर्मणीत्यर्थः । 'अष्टकायै स्वाहा' इतिवत्कर्मनामोच्चारणेन वपाहोमः कार्यः ।

अनाज्ञाते कर्मनाम्नेत्यनुक्त्वा सोदाहरणं वचनं चरुहोमस्थलीयस्य 'अष्टकायै...' (४११) इति सूत्रस्याप्युदाहरणे अन्तर्भावार्थम् । ततश्चेदं सिद्धम् — चरुहोमेष्वपि यत्र देवताया अपरिज्ञानं तत्र कर्मनाम्ना होमः निर्वापत्यागौ च । तत्रैव यदि होमस्य मन्त्रः कथितो देवता तु कथमप्यज्ञाता तदा निर्वापत्यागौ कर्मनाम्ना भवत इति ॥ २८ ॥

४४०. पशुरेव पशोर्दक्षिणा ॥ २९ ॥

पशुरेव पश्वालम्भे ब्रह्मदक्षिणेत्यर्थः ॥ २९ ॥

४४१. स्थालीपाकस्य पूर्णपात्रम् ॥ ३० ॥

अत्र स्थालीपाकार्थं पूर्णपात्रमपि देयम् ।

एवं आचार्यैः पशुसाध्यत्वेनैव मध्यमाष्टकायज्ञ उक्तः । किन्तु कलौ स्मार्तकर्मणि पश्वालम्भस्य शिष्टैरनादृतत्वादनुकल्पेनैव कर्तव्यो भवति । अनुकल्पश्चोक्तो गोभिलेन — 'यद्यु वा अल्पसम्भारतमस्स्यादपि पशुनैव कुर्वीत । अपि वा स्थालीपाकं कुर्वीत' (४ १-१८,१९) इति ।

प्रथमसूत्रे गोस्थाने छाग उक्तः । द्वितीये तत्स्थाने स्थालीपाकः । अयं व्यञ्जनार्थस्थालीपाक ओदनचरुभिन्नः ।

तच्छ्रपणप्रकारश्च कर्मप्रदीपे —

" स्थालीपाकं पशोस्स्थाने कुर्याद्यथानुकल्पिकम ।
श्रपयेत्तं सवत्सायास्तरुण्या गोः पयस्यनु ॥ " इति ।

एवं च तत्कार्यापत्तेस्तद्धर्मलाभ इति न्यायादष्टर्चेनैव होमस्स्यात् । तथा च कात्यायनः—

" चरितार्था श्रुतिः कार्या यस्मादप्यनुकल्पतः ।
अतोऽष्टर्चेन होमस्स्याच्छागपक्षे चरावपि ॥

अवदानानि यावन्ति क्रियेरन् प्रस्तरे पशोः ।
तावतः पायसान् पिण्डान् पश्वभावेऽपि कारयेत् ॥ "इति ॥

अयं प्रयोगक्रमः व्यञ्जनार्थस्थालीपाकपक्षेऽपि—

सङ्कल्पः, अग्न्युपसमाधानं, पात्रद्रव्यसादनं (स्थालीद्वयं, कंसः, मेक्षणद्वयं, तण्डुलाः, पयश्च), ब्रह्मोपवेशनं, ओदनार्थं निर्वापः, पायसार्थतण्डुलानामग्नेः पुरस्तात् स्थापनं, तत्प्रोक्षणं, तत एकदेशं (वामसक्थिस्थानीयं) आदायान्वष्टक्यार्थमन्यत्र निधानं, चरुद्वयश्रपणं, पायसचरोर्द्वादश पिण्डानादाय पलवत्प्लक्षशाखासु निधानं, स्थालीपाकादीनां च सादनं, पायसपिण्डेभ्यः ओदनचरोश्चावदाय कंसे निधानं, परिस्तरणाद्याज्यभागान्तकरणं, अग्नावित्यादिना आज्यहोमः, कंसस्थं चरुं त्रेधा विभज्य षड्भिः ऋग्भिः त्रयो होमाः, पायसपिण्डेभ्य ओदनचरोश्चावदाय स्विष्टकृद्धोमः, तन्त्रसमापनं, इति ॥ १० ॥

इति तृतीये पटले चतुर्थः खण्डः ॥

४४२. नवमीं दशमीं वान्वष्टक्यम् ॥ १ ॥

मध्यमाष्टकादिनानन्तरदिने नवम्यामपराह्णे अन्वष्टक्यं कर्तव्यम् । नवमीह्रासवशादुत्तरदिने कर्मकाले यदि दशमीव्याप्तिः तदाप्युत्तरदिने एव कर्तव्यम । अष्टमीवृद्ध्या अशुचित्वाद्यनुपपत्तिभिर्वा यद्युत्तरदिने कर्मासंभवस्तदा तदुत्तरदिने कर्तव्यम् । गोभिलश्च — 'श्वस्ततोऽन्वष्टक्यम । अपरश्वो वा ।' (४-२-१,२) इति ।

इदं चान्वष्टक्यमस्माकं मध्यमाष्टकानन्तरमेव । न प्रत्यष्टकमन्येषां कौत्सादीनामिव । तेषां हि सर्वा अप्यष्टका मांसयुक्ताः । तस्मात्तेषां प्रत्यष्टकं संज्ञप्तपशुमांसशेषसंभवादन्वष्टक्यं संभवति अष्टकासंज्ञप्तपशुमांसशेषसाध्यत्वादन्वष्टक्यस्य । अस्माकं तु मध्यमाष्टकायामेव मांसविधानात्तदनन्तरमेव । तथा च स्मर्यते— 'अन्वष्टक्यं मध्यमायामिति गोभिलगौतमौ ।' इति ।

तदिदमन्वष्टक्यं होमपिण्डदानात्मकं ब्राह्मणभोजनरहितमेवास्माकं खादिरसूत्रानुयायिनाम् ॥ १ ॥

४४३. दक्षिणपूर्वे भागे परिवार्य तत्रोत्तरार्धे मथित्वाग्निं प्रणयेत् ॥ २ ॥

गृहस्याग्नेयभागे पटादिभिः परिवार्य परिवृते देशे उत्तरतो मथित्वा अग्निं प्रणयेत् । मथिताग्न्यभावे गृह्याग्निं प्रणयन्ति । नात्र ब्रह्मा पित्र्यत्वात् । तथा च कर्मप्रदीपः —

"एकाग्नौ पितृयज्ञे च ब्रह्माणं नोपकल्पयेत् ।
सायं प्रातश्च होमेषु तथैव बलिकर्मसु ॥" इति ।

अत्र च अङ्गहोमानां प्रतिषेधोऽनुपदमेव (४५२) वक्ष्यते। नित्यहोमप्रकारादत्र श्रपणं (४४४) स्तरणं (४४९) चैव विशेषः।

अत्र सर्वमाग्नेय्यभिमुखेन कर्त्रा कार्यम् 'तथामुखैः कृत्यं' (४-२-५) इति गोभिलवचनात्॥ २॥

अग्निं लक्षणे प्रतिष्ठाप्य प्राचीनावीती

**४४४. सकृद्गृहीतान् व्रीहीन् सकृत्फलीकृतान् प्रसव्यमुदायुवन्[1] श्रपयेत्॥ ३॥**

सकृद्गृहीत्वा पितृतीर्थेन उलूखले निरुप्तान् अवहत्य सकृद्वितुषीकृतान् सकृत्प्रक्षालितान् (१४४) सपवित्रान् व्रीहितण्डुलान् स्थाल्यां कृत्वा अप्रदक्षिणमुदायुवं श्रपयेत। 'पितृभ्यस्त्वा जुष्टं निर्वपामि' इति निर्वापः॥ ३॥

**४४५. अमुष्माच्च सक्थ्नो मांसमिति॥ ४॥**

इतिशब्दश्चार्थः। पूर्वमुत्कृत्य निहितात् (४२८) सक्थ्नो मांसं चादाय पृथक् श्रपयेत। मध्यमाष्टकायां पायसचरुपक्षे पूर्वं निहितैस्तण्डुलैः (४४१) पायसचरुः श्रपयितव्यः॥ ४॥

**४४६. दक्षिणोद्वास्य न प्रत्यभिघारयेत्॥ ५॥**

श्रपितमोदनचरुं मांसचरुं (पायसचरुं) च आज्येनाभिघार्याग्नेर्दक्षिणत उद्वासयेत। प्रत्यभिघारणं न कुर्यात्॥ ५॥

**४४७. पश्चादग्नेर्दक्षिणतास्तिस्रः कर्षूः खन्याच्चतुरङ्गुलमधस्तिर्यक्॥ ६॥**

---

1. उदायुवं—क ख झ ञ ट।

अग्नेः पश्चाद्दक्षिणभागे चतुरङ्गुलपृथ्वीः प्रादेशायामास्तिस्रः कर्षूर्वाय्वग्निदिङ्मुखान्ता दक्षिणापवर्गं खन्यात् । तथा च गोभिलः — ' प्रादेशायामाश्चतुरङ्गुलपृथ्वीस्तथावखाताः ' (४-२-१७) इति । कर्मप्रदीपे च —

" वाय्वग्निदिङ्मुखान्तास्ताः कार्यास्साधाङ्गुलान्तराः ।
तीक्ष्णाग्रा यवमध्याश्च मध्यं नाव इवोत्किरेत् ॥ " इति ।

कर्षूखननं च शङ्कुना कार्यम् । शङ्कुश्च

" शङ्कुश्च खादिरः कार्यो रजतेन विभूषितः ।
शङ्कुश्चैवोपवेशश्च द्वादशाङ्गुल इष्यते ॥ "

इति कर्मप्रदीपोक्तलक्षणो ज्ञेयः । उपवेशो वक्ष्यमाणा (४५१) ब्रसी । एतत्पर्यन्तं प्राचीनावीतम् । अथोपवीतम् ॥ ६ ॥

४४८. तासां पुरस्तादग्निं प्रणयेत् ॥ ७ ॥

कर्षूणां पुरस्तात् स्वस्तरार्थं द्विपदमतीत्य कृत्स्नं मथिताग्निं अपरेण कर्षूः पर्याहृत्य — गोभिलवचनात् — प्रणयेत् । गृह्याग्निश्चेदेकदेशं प्रणयन्ति ॥ ७ ॥

४४९. स्तृणुयात् ॥ ८ ॥

अग्नेः पश्चात् प्रागग्रान् दर्भान् । इतः परं प्राचीनावीतिना भाव्यम् ॥ ८ ॥

४५०. कर्षूश्च ॥ ९ ॥

स्तृणुयादित्यनुवर्तते । स्तरणं च कर्षूणामुपरि पृथक् पृथक् कार्यम् । तथा च कर्मप्रदीपः— ' अग्न्याशाग्रैः कुशैः कार्यं कर्षूणां

स्तरणं घनैः’ इति ॥ ९ ॥

४५१. पश्चादग्नेः स्वस्तरं दक्षिणाग्रैस्तृणैः[1] दक्षिणाप्रवणमास्तीर्य ब्रसीमुपनिदध्यात् ॥ १० ॥

कर्षूणां पुरतः स्तरणात्पश्चात् दक्षिणाग्राणि तृणान्यास्तीर्य तत्र ब्रसीं उपवेशकूर्मफलकशब्दाभ्यां प्रसिद्धां निदध्यात् । अत्र ‘··· दक्षिणाग्रैः कुशैः ···’(४. २. २३.) इति गोभिलः ॥

४५२. तस्मिन्नेकैकमाहरेत् ॥ ११ ॥

तस्मिन् स्वस्तरे त्रीणि उदकपूर्णानि पात्राणि, तिस्रो दर्भपिञ्जूलीः, अञ्जनं, तैलं, गन्धान्, सूत्रतन्तून्, चरुस्थाल्यौ, मेक्षणे, कंसं, दर्वीं, आज्यं च एकैकश आहरेत् । आहरणं स्वस्तर एव न तु ब्रस्याम्, तस्मिन्निति पुल्लिङ्गनिर्देशात्, ‘स्वस्तरे सर्वमासाद्य’ इति कर्मप्रदीपवचनाच्च । ब्रसीनिधानं तु अदृष्टार्थम् ।

तत उपवीती भूत्वा पर्युक्ष्य इन्धनार्थां समिधमादध्यात् । नात्र आज्यभागौ उपघातहोमत्वात् । तथा च गृह्यसंग्रहे—

“यद्युपघातं जुहुयाच्चरावाज्यं समावपेत् ।
मेक्षणेन तु होतव्यं नाज्यभागौ न स्विष्टकृत् ॥” इति ।

नापि व्याहृतिहोमः ।

“सायंप्रातर्वैश्वदेवे पितृयज्ञे तथैव च ।
कम्बूके गोमये नित्यं व्रतानां समिधासु च ॥
चैत्ये यूपे व्रीहियवे भूमावप्सु च याज्ञिकैः ।
व्याहृतीर्न प्रयोक्तव्या यज्ञवास्तुक्रिया तथा ॥”

1. ‘तृणैः’ नास्ति ब्रे ।

इति गृह्यासंग्रहवचनात् । एतेनैवोत्तरत्र व्याहृतिहोमो यज्ञवास्तु च प्रतिषिद्धे ॥ ११ ॥

**४५३. कंसे समवदाय मेक्षणेनोपघातं जुहुयात् स्वाहा सोमाय पितृमते स्वाहाग्नये कव्यवाहनायेति ॥१२॥**

चरुं मांसं (पायसचरुं) च कंसे निक्षिप्य मिश्रीकृत्य मेक्षणेनोपघातं जुहुयाद् द्वे आहुती उक्तमन्त्राभ्याम् । स्वाहान्ते होमः पश्चान्मन्त्रसमापनम् (१६) । ततस्समिदाधानमनुपर्युक्षणं वामदेव्यगानं च कुर्यात् ॥ १२ ॥

प्राचीनावीती भूत्वा —

**४५४. सव्येनोल्मुकं[1] दक्षिणतः कर्षूषु[2] निदध्यादपहता इति ॥**

सव्येन पाणिनेति शेषः । उल्मुकस्यादानमेव सव्येन, तस्य कर्षूणां दक्षिणतो निधानं तु सव्यान्वारब्धेन दक्षिणेन पाणिनेति कर्मप्रदीपः । 'अपहता असुरा रक्षांसि वेदिषदः' इति मन्त्रः । 'ये रूपाणि' इत्यादेर्मन्त्रस्याप्यत्रैव विनियोगः गोभिलसूत्रात् (४-३-३) ॥ १३ ॥

**४५५. पूर्वस्यां कर्ष्वां पितुः ॥ १४ ॥**

पूर्वस्यां प्रथमं खातायाम् । आवाहनादिकं कुर्यादिति शेषः ॥ १४ ॥

**४५६. मध्यमायां पितामहस्योत्तमायां प्रपितामहस्य ॥**

स्पष्टस्सूत्रार्थः । पित्रादीन् 'एत पितरः' इत्यादिना

---

1 'प्राचीनावीती' अधिकम् — न. ठ । 2. कर्षूः — ग ।

मन्त्रेणावाहयेत् 'अथ पितॄनावाहयत्येत पितरस्सौम्यास इति' (४-३-४) इति गोभिलवचनाल्लिङ्गाच्च। मन्त्रमुक्त्वा '··गोत्रं ··· शर्माणं पितरमावाहयामि' इतिवदावाहयेत्। अत्र सर्वं पितृतीर्थेन कार्यम् ॥ १५ ॥

४५७. उदपात्राण्यपसलवि कर्षूषु निनयेदेकैकस्य नामोक्त्वा असाववनेनिक्ष्व[1] ये चात्र त्वानु यांश्च त्वमनु तस्मै ते स्वधेति ॥ १६ ॥

अयमर्थः — एकमुदपात्रं गृहीत्वा पितृतीर्थेन पूर्वस्यां कर्ष्वां निनयेत् '···गोत्र··· शर्मन् पितः अवनेनिक्ष्व ये चात्र त्वानु यांश्च त्वमनु तस्मै ते स्वधा' इति। मन्त्रान्ते उपचारः। एवमितरयोश्चावनेजनमितराभ्यां पात्राभ्याम्। 'पितः' शब्द-स्थाने 'पितामह' 'प्रपितामह' इति ब्रूयात्।

पित्रादिनामापरिज्ञाने पितुः, '··· गोत्र पृथिवीषद् अवनेनिक्ष्व' इति ब्रूयात्। पितामहस्यान्तरिक्षसदिति प्रपिता-महस्य दिविषदिति च सम्बोधनम्। एवमेव सर्वेषूपचारेषु। तथा च (हेमाद्रौ) बोधायनः —

"पृथिवीषत्पिता वाच्यस्तत्पिता चान्तरिक्षसत्।
अभिधानापरिज्ञाने दिविषत्प्रपितामहः ॥" इति।

अत्रैव पिण्डदानप्रकरणे गोभिलः — 'यदि नामानि न विद्यात् स्वधा पितृभ्यः पृथिवीषद्भ्य इति प्रथमं पिण्डं निदध्यात्, स्वधा पितृभ्योऽन्तरिक्षसद्भ्य इति द्वितीयं, स्वधा

---

1 अवनेनिक्ष्व — क ख ग।

पितृभ्यो दिविषद्भ्य इति तृतीयम्' (४-३-१०) इति ॥ १६ ॥

**४५८. तथैव पिण्डान्निधाय जपेदत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति ॥ १७ ॥**

मिश्रितकव्यशेषं त्रेधा विभज्य त्रीन् पिण्डान् कृत्वा एकैकस्यां कर्ष्वामेकैकं निदध्यात पूर्वसूत्रोक्तमन्त्रेण । किन्तु अवनेनिक्ष्वेत्यत्र भुङ्क्ष्वेत्यूहः (४६३)। पिण्डनिधानानन्तरं 'अत्र' इत्यादिं मन्त्रं जपेत् ॥ १७ ॥

**४५९. उक्त्वोदङ्ङावर्तेत सव्यं बाहुमुपसंहृत्य प्रसव्यमावृत्य ॥ १८ ॥**

'अत्र पितरः' इत्यादिं मन्त्रमुक्त्वा सव्यं बाहुमुपसंहृत्य सङ्कुचितं कृत्वा प्रसव्यं अप्रदक्षिणमावृत्य उत्तराभिमुखो भवेत। अत्र कात्यायनश्च 'अत्र पितर इत्युक्त्वोदङ्ङास्ते आतमनादात्मानमावृत्यामीमदन्त इति जपति' (चन्द्रिकायां) इति ॥ १८ ॥

**४६०. उपताम्य कल्याणं ध्यायन्नभिपर्यावर्तमानो जपेदमीमदन्त पितरो यथाभागमावृषायिषतेति ॥ १९ ॥**

उत्तराभिमुखो यथाशक्ति अनुच्छ्वसन् 'पितरो मे शुभं दद्युः' इति क्षेममाशंसन् पूर्ववदाग्नेय्यभिमुखो भवितुं प्रदक्षिणमावर्तमानः 'अमीमदन्त पितरः' इत्यादिं मन्त्रं जपेत। जपानन्तरमुच्छ्वसेत । 'जपंस्तेनैव चावृत्य ततः प्राणान् प्रमोचयेत' इति कर्मप्रदीपः ॥ १९ ॥

**४६१. तिस्रो दर्भपिञ्जूलीरञ्जने निघृष्य कर्षूषु निदध्याद्यथापिण्डम् ॥ २० ॥**

तिस्रो दर्भपिञ्जूलीरञ्जयित्वा पिण्डनिधानक्रमेण प्रतिकर्षु एकैकां पिञ्जूलीं निदध्यात् पिण्डोपरि '...पिण्डे निदध्यात्...' (४-३-१३) इति गोभिलवचनात् । मन्त्रे अवनेनिक्ष्वेत्यत्र अङ्क्ष्वेत्यूहः ॥ २० ॥

४६२. तैलं सुरभि च ॥ २१ ॥

सुरभि चन्दनम् । अभ्यङ्क्ष्व अनुलिम्पेति क्रमेण ऊहः ॥

४६३. पिण्डप्रभृति यथार्थमूहेत् ॥ २२ ॥

यथार्थं अर्थानुगुणम् । पिण्डस्य भुङ्क्ष्व अञ्जनस्य अङ्क्ष्वेत्यादि ।

केचन स्वधाशब्दस्थानेऽपि पिण्डः इतिवदूहं कुर्वन्ति । तन्न युक्तम् । न स्वधाकार आनुगुण्याय ऊहमपेक्षते पित्र्यदान-मन्त्रत्वात्तस्य ।

तथा च ब्रह्मवैवर्ते— 'स्वधान्तं मन्त्रमुच्चार्य पितृभ्यो देहि चेति च' इति । 'पितृगणस्य च तृप्तिहेतुरुच्चार्यसे त्वमत एव जनैः स्वधा च' इति सप्तशतीश्लोके नागेशभट्टोऽपि 'स्वधा—पित्र्य-दानमन्त्रः' इति व्याचख्यौ ।

पिण्डनिधानकाले स्वधाशब्दस्योच्चार्यत्वमुक्तं षड्विंशन्मते श्राद्धप्रकरणे —

"सव्यं जानु निपात्यैव भूमौ पिण्डान् प्रयत्नतः ।
निर्वपेत् पितृतीर्थेन स्वधाकारमुदीरयन् ॥" इति ॥ २२ ॥

४६४. अथ निह्नवनम् ॥ २३ ॥

कर्षूस्थपितॄणां नमस्कारो वक्ष्यमाणो निह्नवनशब्देनोच्यते ।

अनुषङ्गविधया प्रत्युपचारं निह्नवनं माभूदित्येतदर्थमथशब्द-प्रयोग इति गोभिलसूत्रभाष्ये भट्टनारायणः ॥ २३ ॥

४६५. पूर्वस्यां कर्ष्वां दक्षिणोत्तानौ पाणी कृत्वा नमो वः पितरो जीवाय नमो वः पितरश्शूषायेति ॥ २४ ॥

पूर्वस्यां कर्ष्वां पूर्वकर्षूपरि दक्षिणं पाणिमुत्तानं कृत्वा तदुपरि वामं पाणिं न्यञ्चं कृत्वा उक्तं मन्त्रं जपेदिति शेषः ॥

४६६. सव्योत्तानौ मध्यमायां नमो वः पितरो घोराय नमो वः पितरो रसायेति ॥ २५ ॥

स्पष्टम ॥ २५ ॥

४६७. दक्षिणोत्तानौ पश्चिमायां नमो वः पितरस्स्वधायै नमो वः पितरो मन्यव इति ॥ २६ ॥

पश्चिमायां उत्तमायामित्यर्थः ॥ २६ ॥

४६८. अञ्जलिं कृत्वा नमो व इति ॥ २७ ॥

'नमो वः पितरः पितरो नमो वः' इति ॥

उत्तरमन्त्रयोराचार्यैः विनियोगो नोक्तः । गोभिलेन तु उक्तस्सूत्रद्वयेन 'गृहानवेक्षते गृहान्नः पितरो दत्तेति । पिण्डानवेक्षते सदो वः पितरो देष्मेति' (४-३-२२,२३) इति । गृहान् गृहं पत्नीं वा ॥ २७ ॥

४६९. सूत्रतन्तून् कर्षूषु निदध्याद्यथापिण्डमेतद्व इति ॥

'एतद्वः पितरो वासः' इति मन्त्रेण पिण्डनिधानक्रमेण प्रतिकर्षु पिण्डे सूत्रतन्तुं निदध्यात् ।

"एतद्वः पितरो वास इति जल्पन् पृथक् पृथक्।
अमुकामुकगोत्रैतत्तुभ्यं वासः पठेत्ततः।
दद्यात् क्रमेण वासांसि श्वेतवस्त्रभवा दशाः॥"

इति च ब्रह्मपुराणवचनम्॥ २८॥

**४७०. ऊर्जं वहन्तीरिति कर्षूरनुमन्त्रयेत॥ २९॥**

कर्षूः पश्यन् 'ऊर्जं वहन्तीः' इत्यादिं मन्त्रं ब्रूयात्। अत्र गोभिलः— 'सव्येनैव पाणिनोदपात्रं गृहीत्वावसलवि पिण्डान् परिषिञ्चेदूर्जं वहन्तीरिति' (४-३-२६) इति॥ २९॥

**४७१. मध्यमं पिण्डं पुत्रकामां प्राशयेदाधत्तेति॥**

पतिर्मन्त्रं ब्रुवन्। पुत्रकामनाभावे 'ब्राह्मणोऽग्निरजो गौर्वा भक्षयेदप्सु वा क्षिपेत्' इति देवलोक्ता प्रतिपत्तिस्सर्वपिण्डसाधारणा॥ ३०॥

**४७२. अभून्नो दूत इत्युल्मुकमग्नौ प्रक्षिपेत्॥ ३१॥**

दक्षिणतो निहितमुल्मुकम (४५४)॥ ३१॥

**४७३. द्वन्द्वं पात्राण्यतिहरेयुः॥ ३२॥**

परिचारका निहितानि पात्राणि द्वन्द्वशोऽतिहरेयुः नयेयुः॥

**४७४. एष एव पिण्डपितृयज्ञकल्पः॥ ३३॥**

पिण्डपितृयज्ञेऽप्येषैव इतिकर्तव्यता॥ ३३॥

किन्तु,

**४७५. गृह्येऽग्नौ हविश्श्रपयेत्॥ ३४॥**

न मथिते। हविः ओदनचरुमात्रम्॥ ३४॥

४७६. तत एवातिप्रणयेत् ॥ ३५ ॥

ततः गृह्याग्नेः ॥ ३५ ॥

४७७. एका कर्षूः ॥ ३६ ॥

दक्षिणान्ता 'दक्षिणान्तां तदग्रैस्तु पितृयज्ञे परिस्तरेत्' इति कर्मप्रदीपोक्तेः । एकैव पित्रादीनां त्रयाणामपि ॥ ३६ ॥

४७८. न स्वस्तरः ॥ ३७ ॥

उदकपात्रादिसादनार्थः ।

मन्त्रपाठक्रमेण अत्र वक्तव्यो 'यत्कुसीदम्' इत्यादेर्मन्त्रस्य विनियोग आचार्येर्णोक्तः । गोभिलेन तूक्तः 'ऋणे प्रज्ञायमाने गोलकानां मध्यमपर्णेन जुहुयाद् यत्कुसीदमिति' (४-४-२५) इति सूत्रेण । 'ऋणे दातव्यत्वेन ज्ञायमाने उत्तमर्णे तत्कुल्येषु चासत्सु ऋणादानजन्यपापनिवृत्त्यर्थं पलाशानां मध्यमपर्णेन आज्यं जुहुयात् 'यत्कुसीदम्' इत्यादिना मन्त्रेण । आज्यं च यावत्प्रमाणमृणं तावत् ।' इति तद्व्याख्यानम् ॥ ३७ ॥

४७९. इन्द्राण्यास्स्थालीपाकस्यैकाष्टकेति जुहुयादेकाष्टकेति जुहुयात् ॥ ३८ ॥

एकाष्टका माघ्यनन्तराष्टमीति पूर्वमीमांसाभाष्ये शबरस्वामिभिर्निर्णीतम् । आपस्तम्बमतं च तथैव । 'एकाष्टका' इति मन्त्रलिङ्गादिन्द्राणीस्थालीपाकस्तस्यामेव कर्तव्यः । अतः उत्तमाष्टकास्थालीपाकेन सह समानतन्त्रेण (३८४) कर्तव्यो भवति । ततश्च अष्टकार्थमोदनचरुः, शाकचरुः, इन्द्राणीस्थाली-

पाकचरुश्चेति चरुत्रयं श्रपयितव्यम् । इन्द्राणीस्थालीपाकस्य 'इन्द्राण्यै त्वा जुष्टं निर्वपामि' इति निर्वापः । 'अष्टकायै स्वाहा' इति उत्तमाष्टकाहोमः । 'एकाष्टका' इत्यादिना मन्त्रेणेन्द्राणीस्थालीपाकहोमः । द्विरुक्तिः पटलसमाप्तिसूचिका ॥ ३८ ॥

इति पट्टाभिरामार्यकृतायां खादिरसूत्रवृत्तौ सूत्रार्थबोधिन्यां तृतीये पटले पञ्चमः खण्डः ॥

समाप्तस्तृतीयः पटलः ॥



## अथ चतुर्थः पटलः ॥

नित्यानि गृह्यकर्माण्युक्त्वा काम्यानि वक्ष्यन् तदङ्गं भोजननियममाह —

**४८०. काम्येषु षड् भक्तानि त्रीणि वा नाश्नीयात् ॥ १ ॥**

येषां कर्मणां फलोद्देशेन विधानं अननुष्ठाने च न प्रत्यवायः तानि काम्यानि । तेषु अनुष्ठीयमानेषु पुरस्तात् षड् भक्तानि दिनत्रयं – एकस्मिन् दिने भक्तद्वयस्य विहितत्वात् – नाश्नीयात । अशक्तौ दिनत्रये प्रतिदिनमेकवारमश्नीयात् ॥ १ ॥

**४८१. नित्यप्रयुक्तानामादितः ॥ २ ॥**

चिरकालं प्रतिदिनमनुष्ठेयत्वेन विहितानामनकाममार-जपादीनां (४९८) आदितः प्रथमप्रयोग एव षड् भक्तानि त्रीणि वा नाश्नीयात्; द्वितीयादिप्रयोगार्थमुपवासे नित्यत्वहानेः । 'नित्य-प्रयुक्तानां तु प्रथमप्रयोगेषु' (४–५–११) इति गोभिलः ॥ २ ॥

**४८२. उपरिष्टात्सान्निपातिके ॥ ३ ॥**

यस्य निमित्तं सन्निपतितमेव ज्ञायते तत् कर्म सान्नि-पातिकम् । परिवेषणादिकालिकेषु कर्मसु (४९४) कर्मानुष्ठाना-नन्तरं षड् भक्तानि त्रीणि वा नाश्नीयात् ॥ ३ ॥

**४८३. एवं यजनीयप्रयोगेषु ॥ ४ ॥**

यजनीये प्रतिपदि कार्येषु अलक्ष्मीनिर्णोदपूर्णहोमादिषु (४९९, ५४३) एवं षड् भक्तानि त्रीणि वा नाश्नीयात्। न तु औपवसथिकभोजनमात्रेण नियमसिद्धिः ॥ ४ ॥

४८४. [1] अर्धमासमर्धमासव्रती ॥ ५ ॥

'अर्धमासव्रती पौर्णमास्यां रात्रौ ···' (४९१) इत्यादि-सूत्रोक्तेषु कर्मस्वधिकृतः अर्धमासं नाश्नीयादिति वर्तते । षड् भक्तानि त्रीणि वा इति न संबध्यते योग्यताविरहात् ॥ ५ ॥

४८५. अशक्तौ पेयमेकं कालम् ॥ ६ ॥

अर्धमासव्रती उपवासाशक्तौ यावद्व्रतं प्रतिदिनमेक वारं पेयं क्षीरादिकं अश्नीयादिति वर्तते । नेति चात्र निवृत्तम् ॥ ६ ॥

४८६. अरण्ये प्रपदं जपेदासीनः प्रागग्रेषु ॥ ७ ॥

प्राङ्मुखः 'प्राङ्मुखकरणं चानादेशे' द्रा.श्रौ.सू.(१-२-२२) इति वचनात् । दर्भेषूदगग्रेषु प्राप्तेषु (११) प्रागग्रेष्विति विशेष-विधिः । प्रपदस्वरूपं च पूर्वं (४६) उक्तम् ॥ ७ ॥

४८७. एवं ब्रह्मवर्चसकामः ॥ ८ ॥

पूर्वसूत्रोक्तप्रकारेण ब्रह्मवर्चसकाम आ कामप्राप्तेः अहरह-र्जपेत् । आदितो दिनत्रयं भोजननियमः ॥ ८ ॥

४८८. यथोक्तं पशुकामः ॥ ९ ॥

पशुकामस्तु पारिभाषिकेन (११) विधिनोदगग्रेषु दर्भेषु प्राङ्मुखो जपेदित्यर्थः ॥ ९ ॥

---

1. 'अर्धमासं' नास्ति — क ख ग घ ङ द ठ।

**४८९ सहस्रबाहुरिति पशुस्वस्त्ययनकामो व्रीहियवौ जुहुयात् ॥ १० ॥**

पशूनां व्याध्यादिनिवृत्तिं बलाद्यभिवृद्धिं च कामयमानो व्रीहियवौ मिश्रीकृत्य जुहुयात् 'सहस्रबाहुः' इत्यादिना मन्त्रेण।

अयं होमः 'सायं प्रातः' (४५२) इत्यादिकर्मप्रदीपवचनाद्व्याहृतिहोमयज्ञवास्तुक्रियाप्रतिषेधे नित्यहोमवान्निरङ्गहोमः संवृत्तः। अतो नात्र ब्रह्मा (१८) नापि पर्युक्षणवर्जंपरिसमूहनादीनि (१०९)। एषैवावृत परिचरणतन्त्रमुच्यते ॥ १० ॥

**४९०. येनेच्छेत्सहकारं कौतोमतेनास्य महावृक्षफलानि परिजप्य दद्यात् ॥ ११ ॥**

यस्य साहाय्यमिच्छति तस्मै महावृक्षफलानि 'कौतोमतं संवननं' इत्यादिना मन्त्रेण परिजप्य दद्यात्। महावृक्षा भोज्यफला नारिकेलचूतबीजापूराद्याः। अत्र विशेषमाह गोभिलः—'एकभूयांस्यात्मनो युग्मानि कुर्वीत' (४-५-२०) इति। परिजपितेषु फलेषु एकाधिकानि युग्मानि त्रीणि पञ्च वा स्वयं च भक्षयेदित्यर्थः ॥ ११ ॥

**४९१. अर्धमासव्रती पौर्णमास्यां रात्रौ नाभिमात्रं प्रगाह्याविदासिनि ह्रदेऽक्षततण्डुलानास्येन जुहुयादुदके वृक्ष इवेति पञ्चभिः ॥ १२ ॥**

पौर्णमास्यां रात्रौ अविदासिनि ग्रीष्मेऽपि शोषरहिते ह्रदे नाभिमात्रे जले स्थित्वा 'वृक्ष इव' इत्यादीन् पञ्च मन्त्रान् प्रत्येकं

स्वाहाकारान्तानुच्चार्य प्रतिमन्त्रान्तमास्ये निक्षिप्तान् यवमिश्रान् व्रीहितण्डुलानास्येन जले जुहुयात् । पञ्च आहुतयः । अत्र याव-दुक्तं तावदेव कर्तव्यम् । अक्षता यवाः । साक्षततण्डुला यव-मिश्राः तण्डुलाः ॥ १२ ॥

**४९२. पार्थिवं कर्म ॥ १३ ॥**

उक्तं कर्म पृथिवीफलकं गृहक्षेत्रादिप्रदम ॥ १३ ॥

**४९३. प्रथमयादित्यमुपतिष्ठेद्भोगकामोऽर्थपतौ प्रेक्षमाणे ॥**

प्रथमया ‘ वृक्ष इव ’ इत्यारम्भया ऋचा आदित्यमुप-तिष्ठेत यदीयमर्थादिकमनुबुभूषति तस्मिन् प्रेक्षमाणे ॥ १४ ॥

**४९४. द्वितीययाक्षततण्डुलानादित्ये परिविष्यमाणे बृहत्पत्र-स्वस्त्ययनकामः ॥ १५ ॥**

पश्चाद्भूतकामिदम् सान्निपातिकत्वात् । द्वितीयया ‘ ऋतं सत्ये ’ इत्यारम्भया यवमिश्रान् तण्डुलान् परिचरणतन्त्रेण अग्नौ जुहुयात् सूर्यपरिवेषकाले अश्वगजादिमहावाहनक्षेमलिप्सुः । ‘..... अक्षततण्डुलान् जुहुयात् ... ’ (४-५-२९) इति होमं स्पष्टमाह गोभिलः ॥ १५ ॥

**४९५. तृतीयया चन्द्रमसि तिलतण्डुलान् क्षुद्रपशुस्वस्त्य-यनकामः ॥ १६ ॥**

इदमपि सान्निपातिकम् । चन्द्रे परिविष्यमाणे परिचरण-तन्त्रेण ‘ अभिभागोऽसि ’ इत्यारम्भया होमः । अजादिक्षुद्र-पशुसमृद्धिः फलम् ॥ १६ ॥

**४९६. चतुर्थ्यादित्यमुपस्थाय गुरुमर्थमभ्युत्तिष्ठेत् ॥ १७ ॥**

'कोश इव' इत्यारम्भया आदित्यमुपस्थाय अधिकार्थसङ्ग्रहार्थं प्रतिष्ठेत। 'चतुर्थ्यादित्यमुपस्थायार्थान् प्रपद्येत स्वस्त्यर्थवानागच्छति' (४-५-३१) इति गोभिलः ॥ १७ ॥

**४९७. पञ्चम्यादित्यमुपस्थाय गृहानेयात् ॥ १८ ॥**

'आकाशस्य' इत्यारम्भया ऋचा आदित्यमुपस्थाय प्रवासाद् गृहं प्रत्यागच्छेत्। स्वस्तिमान् गृहमागच्छति ॥ १८ ॥

**४९८. अनकाममारं नित्यं जपेद् भूरिति ॥ १९ ॥**

यस्य जपादकाममारः अनिच्छया मरणं न संभवति सोऽनकाममारो 'भूर्भुवस्स्वरों' इत्यादिर्मन्त्रः। तं प्रतिदिनं जपेत् ॥ १९ ॥

**४९९. यजनीये जुहुयान्मूर्ध्नोऽधि म इति षड्भिर्वामदेव्यर्ग्भिर्महाव्याहृतिभिः प्राजापत्यया च ॥ २० ॥**

पूर्वं दिनत्रयं भोजननियमः। प्रतिपदि उक्तैर्मन्त्रैराज्यहोमः कर्तव्यः। होमश्च दर्शे पूर्णमासे च स्विष्टकृतः पूर्वं प्रधानादूर्ध्वं कार्यः 'प्राक् स्विष्टकृत आवापः' (गो-सू १-८-१५) इति न्यायात् इत्याहुः। त्रयोदश आहुतयः। मन्त्राः — 'मूर्ध्नोऽधि मे' इत्यादयष्षड्चः, वामदेव्यर्चास्तिस्रः, महाव्याहृतयास्तिस्रः, प्राजापत्या च ऋगिति ॥ २० ॥

**५००. अलक्ष्मीनिर्णोदः ॥ २१ ॥**

उक्तस्य होमस्य फलम् ॥ २१ ॥

**५०१. अक्षेमे पथ्यपेहीति जपेत् ॥ २२ ॥**

सभये मार्गे 'अपेहि' इत्यादिं मन्त्रं जपेत्। उपरिष्टाद्व्रतम् ॥ २२ ॥

**५०२. यशोऽहमित्यादित्यमुपतिष्ठेद्यशस्कामः पूर्वाह्णमध्यन्दिनापराह्णेषु ॥ २३ ॥**

अहर्नोऽतिपारयदित्यन्त एष मन्त्रः ॥ २३ ॥

**५०३. प्रातरह्नस्येति यथार्थमूहेत् ॥ २४ ॥**

प्रातरह्नस्येत्यत्र, मध्याह्ने मध्याह्नस्येति, सायं सायाह्नस्येति चोहेत् ॥ २४ ॥

**५०४. आदित्यनावामिति सन्ध्योपस्थानं स्वस्त्ययनम् ॥ २५॥**

सन्ध्योपस्थानं सन्ध्यायामादित्योपस्थानम्। स्वस्त्ययनं क्षेमप्रदं कर्म। उत्तरेषां 'ओं नमः' 'उद्यन्तं त्वा' 'प्रतितिष्ठन्तं त्वा' इत्यादीनां त्रयाणामपि अत्रैव विनियोगः सालिङ्ग्यात् ॥ २५ ॥

अत्र अन्त्ययोः क्रमेण पूर्वपश्चिमसन्ध्ययोर्विनिवेश इत्याह—

**५०५. उद्यन्तं त्वेति पूर्वां प्रतितिष्ठन्तं त्वेति पश्चिमाम् ॥**

गोभिलश्च—'सन्धिवेलयोरुपस्थानं स्वस्त्ययनं आदित्यनावामिति, उद्यन्तं त्वादित्यानूद्यासमिति पूर्वाह्णे प्रतितिष्ठन्तं त्वादित्यानुप्रतितिष्ठासमित्यपराह्णे' (४. ६. ११.) इति ॥ २६ ॥

**इति चतुर्थे पटले प्रथमः खण्डः ॥**

५०६. अर्धमासव्रती तामिस्रादौ ब्राह्मणानाशयेद्व्रीहि-कंसौदनम्[1] ॥ १ ॥

पूर्वं शुक्लपक्षमुपोष्य कृष्णप्रतिपदि द्रोणपरिमितव्रीह्योदनं ब्राह्मणान् भोजयेत् 'द्रोणस्स्यात् कांसमानकः' इति वचनात् ॥१॥

५०७. तस्य कणानपरासु सन्ध्यासु प्रत्यग्ग्रामात् स्थण्डिल-मुपलिप्य भलायेति जुहुयाद् भल्लायेति च ॥ २ ॥

उक्तकंसमितव्रीहीणां कणान् कम्बूकान् तुषानिति यावत् । 'कम्बूकाश्च कणाश्चैव फलीकरणकुक्कुसाः' इति परिशिष्टम् । अपरासु सन्ध्यासु सायंसन्ध्यासु—प्रकृततामिस्रपक्षस्य—ग्रामाद्बहिः पश्चिमायां दिशि स्थण्डिलमुपलिप्याग्नौ परिचरणतन्त्रेण जुहुयात् 'भलाय स्वाहा' इति 'भल्लाय स्वाहा' इति च ॥ २ ॥

५०८. एवमेवापरस्मिंस्तामिस्रादौ ॥ ३ ॥

एवमेव उक्तप्रकारेणैव । अतः अपरस्मिन् कृष्णपक्षे आदौ ब्राह्मणभोजनं प्रतिदिनं सायंसन्ध्यायां कणहोमश्च ॥ ३ ॥

५०९. ब्रह्मचर्यमासमाप्तेः ॥ ४ ॥

आ कर्मसमाप्तेः — उक्तपक्षचतुष्टयं – मैथुनवर्जी भवेत् ॥

५१०. आचितशतं भवति ॥ ५ ॥

'शाकटो भार आचितः' इति वचनात् शकटशतपरिमित-धान्यलाभो भवत्युक्तकर्मानुष्ठातुः इत्यर्थः ॥ ५ ॥

1. कंसोदनं—क

अथ वास्तुकर्म ।

५११. गौरे भूमिभागे ब्राह्मणो, लोहिते क्षत्रियः, कृष्णे वैश्योऽवसानं जोषयेत् समं लोमशं[1] अनिरिण-मशुष्कम् ॥ ६ ॥

अवस्यन्ति निवसन्ति अस्मिन्नित्यवसानं गृहार्थं भूस्थानं तद् जोषयेत् सेवेत परिगृह्णीयादित्यर्थः । गौरे श्वेतपांसौ । समं अनिम्नोन्नतं, लोमशं सतृणं, अनिरिणं अनूषरं, अशुष्कं यत्रो-त्पद्यमाना ओषधयो न शुष्येयुः तत् ॥ ६ ॥

५१२. यत्रोदकं प्रत्यगुदीचीं[2] प्रवर्तेत ॥ ७ ॥

प्रत्यगुदक्प्रवणमित्यर्थः ॥ ७ ॥

५१३. अक्षीरिणः कण्टकिनः कटुकाश्चात्रौषधयो न स्युः ॥

स्पष्टम् ॥ ८ ॥

५१४. दर्भसंमितं ब्रह्मवर्चस्यम् ॥ ९ ॥

दर्भयुक्तमवसानं ब्रह्मवर्चसप्रदम् ॥ ९ ॥

५१५. बृहत्तृणैर्बल्यम् ॥ १० ॥

वीरणादियुक्तं बलप्रदम् ॥ १० ॥

५१६. मृदुतृणैः पशव्यम् ॥ ११ ॥

पशव्यं पशुभ्यो हितम् ॥ ११ ॥

---

1. अनीरिणं - ग। 2. प्रवर्तते। क्षीरिणः - ख ग।

५१७. [1]शाताभिर्मण्डलद्वीपिभिर्वा ॥ १२ ॥

अत्र 'दीर्घस्थू(स्था)लीभिर्मृदुतृणैर्युक्तं पश्वर्थं' इति रुद्रस्कन्दः। अस्मिन् प्रकरणे गोभिलसूत्रं 'शादासंमितं मण्डलद्वीपसंमितं वा' (४-७-१२) इति। 'द्वीपमुन्नतमाख्यातं शादा चैवेष्टका स्मृता' इति कर्मप्रदीपवचनात् इष्टकाकारं — चतुरश्रमित्यर्थः — उन्नतवर्तुलाकारं वा अवसानं जोषयेतेति तदर्थः। प्रकृतसूत्रार्थनिर्णये विद्वांसः प्रभवन्ति ॥ १२ ॥

५१८. यत्र वा स्वयंकृताश्श्वभ्रास्सर्वतोऽभिमुखास्स्युः ॥

यस्मिन् स्थाने अवटाः स्वयमुत्पन्नाः सर्वासु दिक्षु इतरेतराभिमुख्येन अवस्थिताः स्युः तत्र ॥ १३ ॥

५१९. प्राग्द्वारं धन्यं यशस्यं च ॥ १४ ॥

गृहस्य प्राग्दिशि कृतं मुख्यद्वारं धनप्रदं यशःप्रदं च ॥

५२०. उदग्द्वारं पुत्र्यं पशव्यं च ॥ १५ ॥

स्पष्टम् ॥ १५ ॥

५२१. [2]दक्षिणद्वारे सर्वे कामाः ॥ १६ ॥

स्पष्टम्। 'न प्रत्यग्द्वारं कुर्वीत' (४—७—१७) इति गोभिलः ॥ १६ ॥

५२२. अनु द्वारं गेहद्वारम् ॥ १७ ॥

गृहमुखद्वारमनु गेहान्तर्द्वारं कर्तव्यम् ॥ १७ ॥

---

1. स्याद्दर्भमण्डलद्वीपिभिर्वा - ख। शाताभिर्वा मण्डलद्वीपीभिर्वा - ट
2. दक्षिणापश्चिमद्वारे—क ङ। दक्षिणपश्चिमद्वारे—ञ।

५२३. असंलोकी स्यात् ॥ १८ ॥

गृहमध्ये सन्ध्याहोमादिकं कुर्वन् गृहपतिर्बहिस्स्थितानां संलोकी आलोकी यथा न स्यात् तथा द्वारं निर्मिमीत ॥ १८ ॥

एवं निर्मिते गृहे वसतां क्षेमार्थं शान्तिकर्म आह —

५२४. पायसो हविः ॥ १९ ॥

पायसश्चरुः होमद्रव्यम् ॥ १९ ॥

५२५. कृष्णा च गौः ॥ २० ॥

हविरित्यनुवर्तते ॥ २० ॥

५२६. अजो वा श्वेतः ॥ २१ ॥

गोप्रतिनिधिः ॥ २१ ॥

५२७. पायस एव वा ॥ २२ ॥

केवलः पायसचरुः। अस्मिन् पक्षे न गौरजो वा ॥ २२॥

५२८. मध्ये वेश्मनो वसां पायसं चाज्येन मिश्रमष्टगृहीतं जुहुयाद्वास्तोष्पत इति ॥ २३ ॥

गृहमध्ये अग्निस्थापनार्थं गोमयेन चतुरश्रमुपलिप्य तस्य अष्टसु दिक्षु च तथैव बलिहरणार्थमुपलिम्पेत् । वारुणी-नैर्ऋत्योरन्तराळे, ऐन्द्र्यैशान्योरन्तराळे चोपलिम्पेत् ऊर्ध्वा-वाचीभ्यां बलिहरणाय ।

"इन्द्रेशानदिशोर्मध्ये स्थानमूर्ध्वस्य कीर्तितम् ।
नैर्ऋताम्बुपयोर्मध्ये अधस्स्थानं समीरितम् ॥"

इति वचनात् । उपलेपनं च तथा कार्यं यथा दशानामुपलिप्तस्थानानां सन्निवेशः चतुरश्राकारस्स्यात् ।

मध्योपलिप्तस्थाने गृह्याग्निमुपसमाधाय ब्रह्मोपवेशनान्तं कृत्वा 'वास्तोष्पतये त्वा जुष्टं निर्वपामि' इति पायसार्थं तण्डुलान्निरुप्य श्रपयेत् । पशुपक्षे उपस्थितहोमादि (४१३) अङ्गश्रपणान्तं (४२९) मध्यमाष्टकायामिव कुर्यात् । किन्तु 'वास्तोष्पतये त्वा जुष्टं प्रोक्षामि' इति प्रोक्षणम्, 'जातवेदः' इत्यादिना मन्त्रेण वपाहोमः, वामसक्थ्नश्च श्रपणमिति विशेषः । ततो वसां मांसरसं, पायसचरुं, आज्यं चैकीकुर्यात् । केवलपायसपक्षे पायसमाज्यं चैकीकुर्यात् । अत्र गोभिलस्तु—'वसामाज्यं मांसं पायसमिति संयूय' (४–७–२९) इति ।

आज्यभागान्तं कृत्वा स्रुवेण स्रुच्याज्यमुपस्तीर्य एकीकृतस्य पायसस्य मध्यात् पुरस्ताच्च मेक्षणेन त्रिस्त्रिरवदाय अवत्तमाज्येनाभिघार्य 'वास्तोष्पते' इत्यादिना मन्त्रेण जुहुयात् । भृगूणां तु मध्यात् पुरस्तात् पश्चाच्च द्विर्द्विरवदानम् ॥ २३ ॥

**५२९. याश्च परास्सप्तालक्ष्मीनिर्णोदे ताभिश्च ॥ २४ ॥**

अलक्ष्मीनिर्णोदहोमे (४९९) परा यास्सप्त — वामदेव्यर्चः, व्याहृतयः, प्राजापत्या ऋगिति – ताभिश्चाष्टगृहीतं जुहुयात् । सर्वासामाहुतीनामुद्दिश्यत्यागो वास्तोष्पतय इदमिति ॥

**५३०. हुत्वा दिशां बलीन्नयेत् ॥ २५ ॥**

हुत्वा होमं कृत्वा स्विष्टकृदाद्युपरितन्त्रं समापयेदित्यर्थः ।

दिशां प्रागादिचतसृणां बलीन् नयेत् । वामदेव्यगानं बलिहरणान्ते ॥ २५ ॥

**५३१. अवान्तरदिशां चोर्ध्वावाचीभ्यां[1] च ॥ २६ ॥**

आग्नेय्यादीनामूर्ध्वावाचीभ्यां च बलीन्नयेदित्यनुवर्तते ॥

बलिहरणप्रकारश्च गोभिलेन स्पष्टमुक्तः — 'प्रदक्षिणं प्रतिदिशम् । अवान्तरदेशेषु । आनुपूर्व्येणाव्यतिहरन् । इन्द्रायेति पुरस्ताद् वायव इत्यवान्तरदेशे यमायेति दक्षिणतः पितृभ्य इत्यवान्तरदेशे वरुणायेति पश्चान्महाराजायेत्यवान्तरदेशे सोमायेत्युत्तरतो महेन्द्रायेत्यवान्तरदेशे वासुकय इत्यधस्तादूर्ध्वं नमो ब्रह्मण इति दिवि' (४-७-३३ — ३६) इति ।

'अमुष्मै नम इत्येव बलिदानं विधीयते' इति वचनात् 'इन्द्राय नमः' इतिवद्बलिहरणमन्त्रः । ब्रह्मणस्तु 'नमो ब्रह्मणे' इति, विशेषवचनात् । पितृभ्यः 'पितृभ्यः स्वधा' इति । प्रतिबलि पुरस्तादुपरिष्टाच्च परिषेकः (१२३) । ततो वामदेव्यगानमग्न्युपस्थानं ब्राह्मणभोजनं च ।

अत्र सामविधिब्राह्मणे विशेषः — 'प्रदक्षिणं प्रतिदिशं रज्ज्वा यच्छेदवान्तरदेशेषु च यत्राभिसमेयुस्तत्रोपलिम्पेत् रज्ज्वन्तेषु च । शमीपलाशश्रीपर्णीनां पत्रैर्वास्तूपकिरेदक्षतैश्च सुमनोभिश्च । पूर्वैः प्रौष्ठपदैः गृहेऽग्निं प्रतिष्ठाप्य धानावन्तं करम्भिणमित्येतद् गीत्वा पायसमग्नौ जुहुयात् । परेषां च पलाशपर्णमध्यमेषु बल्युपहारः । प्रजापतये स्वाहेति मध्य उपहरेत् । ' इति ॥ २६ ॥

---

1. अवाचिभ्यां — क ङ ञ ट ठ ।

**५३२. एवं संवत्सरे संवत्सरे नवयज्ञयोर्वा ॥ २७ ॥**

एवं होमबलिहरणात्मकं कर्म प्रतिसंवत्सरं सकृत्, यवव्रीहियज्ञकालयोः (३८५) इति द्विर्वा कार्यम्। कर्मभूयस्त्वे फलभूयस्त्वम्। फलं चास्य सामविधौ प्रोक्तम् — 'बहुपशुधनधान्यहिरण्यमायुष्मत्पुरुषं वीरसूस्सुभगाविधवस्त्रीकं शिवं पुण्यं वास्तु भवति' इति ॥ २७ ॥

**५३३. वशङ्गमावित्येताभ्यामाहुती[1] जुहुयाद्यमिच्छेद्वशमायान्तं तस्य नाम गृहीत्वासाविति; वशी हास्य भवति ॥ २८ ॥**

अत्र कर्मप्रदीपः —

"वशङ्गमाविति व्रीहीन् शङ्खश्चेति यवांस्तथा।
असावित्यत्र नामोक्त्वा जुहुयात् क्षिप्रहोमवत् ॥" इति।

मन्त्रस्थ 'असौ' शब्दस्थाने वशीकरणीयस्य नाम ब्रुवन् 'वशङ्गमौ' इत्यादिना मन्त्रेण व्रीहीन् 'शङ्खः' इत्यादिना यवांश्च परिचरणतन्त्रेण जुहुयात्। गृहीतनामा पुरुषो होमकर्तुर्वश्यो भवति ॥ २८ ॥

इति चतुर्थे पटले द्वितीयः खण्डः ॥



1. आहुतिं — क झ ट। आहुती:—ख

**५३४. अर्धमासव्रती पौर्णमास्यां रात्रौ [1]शङ्कुशतं जुहुया-देकाक्षर्यया ॥ १ ॥**

'यस्यास्त एकमक्षरं' इति मन्त्रवर्णयुक्तया ऋचा 'आकूतिं' इत्यारम्भया पौर्णमास्यां रात्रौ शतं शङ्कून् जुहुयात् परिचरण-तन्त्रेण। प्रतिशङ्कु होमः ॥ १ ॥

एवं शङ्कुशतहोमं विधाय तत्रैव फलविशेषापेक्षया द्रव्ये विशेषमाह—

**५३५. आयसान् वधकामः ॥ २ ॥**

शत्रुवधकामः आयसान् शङ्कून् जुहुयात् ॥ २ ॥

**५३६. खादिरानायुष्कामः ॥ ३ ॥**

स्पष्टम्। शङ्कुलक्षणं च कर्मप्रदीपे—

"सत्वचश्शङ्कवः कार्यास्तीक्ष्णाग्रा वीतकण्टकाः।
समिल्लक्षणसंयुक्तास्सूचीतुल्यास्तथायसाः ॥" इति ॥

**५३७. अथापरम् ॥ ४ ॥**

अर्धमासव्रतिना पौर्णमास्यां रात्रौ कर्तव्यं क्रियान्तर-मित्यर्थः ॥ ४ ॥

**५३८. प्राङ्वोदङ् वा ग्रामान्निष्क्रम्य स्थण्डिलं समूह्य पर्वते वारण्यैर्गोमयैस्तापयित्वाङ्गारानपोह्यास्येन जुहुयात् ॥**

उक्तादिशि यत्रकुत्रचित् भूतलं समीकृत्य तत्र वा पर्वते वा आरण्यैः शुष्कगोमयैर्भूमिं प्रताप्य अङ्गारानपोह्य तप्तायां

---

1. शङ्कुशतीं—क।

भूमौ आस्येन सकृद् आज्यं—द्रव्यानादेशात्—जुहुयात् एकाक्षर्यां—प्रकृतत्वात्—मनसा स्मरन् । तथा च गोभिलः—मन्त्रं मनसा अनुद्रुत्य सर्पिरास्येन जुहुयात्' (४-८-१५) इति । अत्र यावदुक्तं तावदेव कर्तव्यम् ॥ ५ ॥

**५३९. द्वादश ग्रामा ज्वलिते ॥ ६ ॥**

तप्तायां भूमौ आज्यसंयोगेन ज्वालायामुत्पन्नायां द्वादश ग्रामा होमकर्तुस्सिद्ध्यन्ति ॥ ६ ॥

**५४०. त्र्यवरा धूमे ॥ ७ ॥**

ज्वालाभावेऽपि धूमो जायेत चेत् त्र्यधिकास्त्रयो वा ग्रामास्सिद्ध्यन्ति ॥ ७ ॥

**५४१. कम्बूकान् सायं प्रातर्जुहुयान्नास्य वृत्तिः क्षीयते ॥**

कम्बूकान् तुषान् प्रतिदिनं सायं होमात् प्राक् प्रातर्होमादुपरिष्टाच्च गृह्याग्नौ प्रकृतया एकाक्षर्यया जुहुयात् परिचरणतन्त्रेण । वृत्त्यविच्छित्तिः फलम् । आदितः त्रिरात्रं भोजननियमः ॥

**५४२. इदमहमिममिति पण्यहोमं जुहुयात् ॥ ९ ॥**

पण्यसंपदर्थं पण्येन, तदवयवेन, वा क्रियमाणो होमः पण्यहोमः । अत्र गोभिलः 'वाससस्तन्तून् गोबालान् । एवमितरेभ्यः पण्येभ्यः ।' (४-८-२१-२२) इति ।

एवं च पण्यं धान्यादि चेत् धान्यादिना, वस्त्रगवाद्यवयवि चेत्तन्तुलाङ्गूललोमाद्यवयवेन होमः परिचरणतन्त्रेण कार्यः । पण्यं मणिरत्नादि चेदाज्येन होम इत्याहुः ॥ ९ ॥

**५४३. पूर्णहोमं यजनीये जुहुयात् ॥ १० ॥**

'पूर्णहोमं' इत्यादिना मन्त्रेण क्रियमाणो होमः पूर्णहोमः। स च प्रतिपदि आज्येन कार्यः। कृष्णप्रतिपदि नित्यहोमात्परं पूर्णमासात्पूर्वं, शुक्लप्रतिपदि दर्शात्परं च परिचरणतन्त्रेण कार्य इत्याहुः। यशःप्राप्तिः फलम् ॥ १० ॥

**५४४. इन्द्रामवदादिति सहायकामः ॥ ११ ॥**

पूर्ववद्यजनीये जुहुयात्। सहायसंपत्तिः फलम् ॥ ११ ॥

**५४५. अष्टरात्रोपोषितः प्राङ् वोदङ् वा ग्रामाच्चतुष्पथे समिद्धाग्निमौदुम्बर इध्मस्स्यात् स्रुवचमसौ च जुहुयादन्नं वा इति श्रीर्वा इति ॥ १२ ॥**

अत्र गोभिलः— 'आज्यमादित्यमभिमुखो जुहुयादन्नं वा एकच्छन्दस्यं श्रीर्वा एषेति च' (४-९-४) इति। द्वे आहुती। अनयोर्मन्त्रयोरादित्यो देवता। अन्नमिति केचित् ॥ १२ ॥

**५४६. ग्रामे तृतीयामन्नस्येति ॥ १३ ॥**

तन्त्रं समाप्य गृहमागत्य गृह्याग्नौ 'अन्नस्य घृतं' इत्यादिना मन्त्रेणाज्यं जुहुयात्। मन्त्रस्यास्य अग्निर्देवतेत्येके। अन्नमेवेत्यन्ये। तृतीयामिति सङ्ख्यावचनेन अत्रापि औदुम्बरा इध्मादयः इति, समुच्चिताभ्यामेवाभ्यां (५४५,५४६) कर्मभ्यां फलसिद्धिरिति च ज्ञायते ॥ १३ ॥

**५४७. आधिपत्यं प्राप्नोति ॥ १४ ॥**

जनाधिपो भवति उक्तकर्मानुष्ठाता ॥ १४ ॥

**५४८. उपतापिनीषु गोष्ठे पायसं जुहुयात् ॥ १५ ॥**

गोषु व्याधिना पीडितासु गोष्ठेऽग्निं प्रतिष्ठाप्य चरुतन्त्रेण पायसं जुहुयाद् 'अन्नं वा एकच्छन्दस्यं' इत्यादिभिस्त्रिभिः। पश्चान्नियमस्सान्निपातिकत्वात्। गवां व्याधिनिवृत्तिः फलम् ॥

**५४९. अक्षेमे पथि वस्त्रदशानां ग्रन्थिं कुर्यात् सहायिनां च स्वस्त्ययनानि ॥ १६ ॥**

भययुक्ते वर्त्मनि आत्मनस्सहायिनां च वस्त्रदशानां ग्रन्थिं कुर्यात् प्रकृतैस्त्रिभिर्मन्त्रैः। प्रत्येकं त्रिभिर्मन्त्रैस्त्रीन् ग्रन्थीन् कुर्यादित्यर्थः। भयनिवृत्तिः फलम्। इदमपि पश्चाद्व्रतम् ॥ १६ ॥

**५५०. क्षुधे स्वाहेत्येताभ्यामाहुतिसहस्रं जुहुयादाचितसहस्रकामः ॥ १७ ॥**

'क्षुधे स्वाहा' 'क्षुत्पिपासाभ्यां स्वाहा' इति मन्त्राभ्यामाज्याहुतिसहस्रं जुहुयादाज्यतन्त्रेण। 'क्षुधे स्वाहा' इति प्रथमाहुतिः, 'क्षुत्पिपासाभ्यां स्वाहा' इति द्वितीया, पुनः 'क्षुधे स्वाहा' इति तृतीया, एवंविधेन क्रमेण सहस्रमाहुतयः। एवं च प्रतिमन्त्रं पञ्चशतान्याहुतयः। सहस्रशकटपरिमितधान्यलाभो भवति ॥ १७ ॥

**५५१. वत्समिथुनयोः पुरीषेण पशुकामोऽविमिथुनयोः क्षुद्रपशुकामः ॥ १८ ॥**

पुरीषेण प्रकृताभ्यां मन्त्राभ्यां आहुतिसहस्रं परिचरणतन्त्रेण ॥ १८ ॥

**५५२. हरितगोमयेन सायंप्रातर्जुहुयान्नास्य वृत्तिः क्षीयते ॥**

आर्द्रगोमयेन प्रकृताभ्यां मन्त्राभ्यां प्रतिदिनं सायंहोमात् पुरस्तात्प्रातर्होमात्परस्ताच्च परिचरणतन्त्रेण होमः। नात्राहुतिसहस्रं जुहुयादिति पुनर्वचनात् प्रतिदिनं कालद्वयेऽपि कार्यत्वाच्च। अतः प्रतिमन्त्रमेकैवाहुतिः। वृत्त्यविच्छेदः फलम्। आदितस्त्रिरात्रं भोजननियमः ॥ १९ ॥

इति चतुर्थे पटले तृतीयः खण्डः ॥



**५५३. विषवता दष्टमद्भिरभ्युक्षन् जपेन्मा भैषीरिति ॥ १ ॥**

विषवता सर्पादिना । आविषनाशमभ्यासः । विषनाशः फलम् ॥ १ ॥

**५५४. स्नातकस्संविशन् वैणवं दण्डमुपनिदध्यात् तुरगोपायेति ॥ २ ॥**

संविशन् शयिष्यमाणः । नित्यप्रयुक्तमिदम् ॥ २ ॥

**५५५. स्वस्त्ययनम् ॥ ३ ॥**

उक्तदण्डोपनिधानस्य चोरसर्पादिबाधानुत्पत्तिः फलम् ॥ ३ ॥

**५५६. हतस्त इति क्रिमिमन्तं देशमद्भिरभ्युक्षन् जपेत् ॥**

क्रिमिमन्तं व्रणदेशं अद्भिरभ्युक्षन् जपेत् 'हतस्ते' इत्यादिं मन्त्रम् । उत्तरेषां 'भरद्वाजस्य' 'हतः क्रिमीणां' 'क्रिमिमिन्द्रस्य' इत्यादीनां त्रयाणामपि मन्त्राणामत्रैव विनियोगः मन्त्रलिङ्गात् । मानुषविषयकोऽयं प्रयोगः ॥ ४ ॥

**५५७. पशूनां चेदपराह्णे सीतालोष्टमाहृत्य तस्य प्रातः पांसुभिः प्रतिष्किरन् जपेत् ॥ ५ ॥**

लाङ्गलपद्धतिस्थं मृत्पिण्डं अपराह्णे आहृत्य,—'...वैहायसं निदध्यात्' (४. ९. १९) इति गोभिलवचनात्— अनाच्छादिते प्रदेशे निधाय परेद्यवि प्रातःकाले तत्पांसुभिः पशोः क्रिमिमन्तं देशं प्रतिष्किरन् विकिरणेन आच्छादयन् जपेत् प्रकृतान् चतुरो मन्त्रान् । पशूनां क्रिमिनाशः फलम् ॥ ५ ॥

अथ मधुपर्कः ।

अत्र 'अर्हणा' इत्यादिर्मन्त्र आचार्येन विनियुक्तः । तद्विनियोजकं गोभिलसूत्रम् — 'उत्तरतो गां बध्वोपतिष्ठेर-अर्हणा पुत्रवाससेति' (४. १०. १) इति । अर्हणप्रदेशस्योत्तरतो गां बध्वा अर्हयिता तद्गृहस्थिताश्च अर्घ्य (५७७) उपतिष्ठेयुः 'अर्हणा' इत्यादिना मन्त्रेण इति तदर्थः ॥

एवमुपस्थितोऽर्हणीयः

५५८. मधुपर्कं प्रतिग्रहीष्यन्निदमहमिमामिति प्रतितिष्ठन् जपेत् ॥ ६ ॥

उदगग्रेषु दर्भेषु प्राङ्मुखस्तिष्ठन् जपेत् । अर्हयिता प्रत्यङ्मुख उदङ्मुखो वा भवेत् ॥ ६ ॥

५५९. अर्हयत्सु वा ॥ ७ ॥

अर्हणकाले एव वा जपेत् ॥ ७ ॥

५६०. विष्टरपाद्यार्घ्याचमनीयमधुपर्काणामेकैकं त्रिर्वेदयन्ते ॥ ८ ॥

अप्रदक्षिणं वलिता अधःकृताग्राः चक्राकारतां प्रपन्नाः पञ्चविंशतिसङ्ख्या वा दर्भा विष्टरः । पादप्रक्षालनार्थमुदकं पाद्यम् । अक्षतपुष्पयुक्तं दधिमिश्रमुदकमर्घ्यम् । तच्च अर्हणीयस्य अञ्जलौ कांस्येन निनेयम् । आचमनार्थमुदकमाचमनीयम् । अक्षतैः पुष्पैर्दध्ना मधुना च संयुतं उदकं मधुपर्कः । स च कांस्यपिधाने कांस्यपात्रे आनीय समर्प्यः । अर्घ्यमधुपर्कयोस्स्वरूपं कर्मप्रदीपे —

"साक्षतं सुमनोयुक्तमुदकं दधिसंयुतम् ।
अर्घ्यं, दधिमधुभ्यां च मधुपर्को विधीयते ॥

कांस्येनैवार्हणीयस्य निनयेदर्घ्यमञ्जलौ ।
कांस्यापिधानं कांस्यस्थं मधुपर्कं समर्पयेत् ॥" इति ॥

एतेषामेकैकं 'विष्टरो विष्टरो विष्टरः' इतिवद् वेदयेरन् । विष्टरद्वयपक्षे (५६३) द्विवचनेन वेदनम् ॥ ८ ॥

**५६१. गां च ॥ ९ ॥**

त्रिर्वेदयन्ते इत्यनुवर्तते ॥ ९ ॥

विष्टरे निवेदिते तं प्रतिगृह्य

**५६२. उदञ्चं विष्टरमास्तीर्य या ओषधीरित्यध्यासीत ॥**

उदञ्चमास्तीर्य उदगग्रं आसने निधाय 'या ओषधीः' इत्यारम्भां प्रथमां ऋचं जपन् तदुपर्युपविशेत् ॥ १० ॥

**५६३. पादयोर्द्वितीयया द्वौ चेत् ॥ ११ ॥**

अधस्तादास्तीर्य 'या ओषधीः' इत्यारम्भां द्वितीयां ऋचं जपन् तदुपरि पादौ कुर्यात् । चेदित्यनेन एको द्वौ वा विष्टरौ देयाविति विकल्पो गम्यते । एकविष्टरपक्षे आसनमात्रम् । 'विष्टरयोरेकमध्यास्ते धौतौ पादावितरस्मिन्' (द्रा.श्रौ.सू. १.२.४) इति वचनात् पादार्थं विष्टरास्तरणं पाद्येन पादप्रक्षालनानन्तरमेव ॥

पाद्ये निवेदिते तत् प्रतिगृह्य

**५६४. अपः पश्येद्यतो देवीरिति ॥ १२ ॥**

अपः पाद्याः ॥ १२ ॥

५६५. सव्यं पादमवसिञ्चेत्सव्यमिति ॥ १३ ॥

अवसिञ्चेत् प्रक्षालयेत् 'सव्यम्' इत्यादिना मन्त्रेण। प्रथमं सव्यपादप्रक्षालने संवदति च स्मृत्यन्तरं — 'सामगः क्षालयेत् सव्यमादावन्यस्तु दक्षिणं' इति ॥ १३ ॥

ततः

५६६. दक्षिणं दक्षिणमिति ॥ १४ ॥

दक्षिणं पादं 'दक्षिणं' इत्यादिना मन्त्रेण अवसिञ्चे-दित्यनुवर्तते ॥ १४ ॥

५६७. उभौ शेषेण ॥ १५ ॥

पाद्यशेषेण उभौ पादाववसिञ्चेत् 'पूर्वमन्यं' इत्यादिं मन्त्रं जपन्। तथा च गोभिलः — 'पूर्वमन्यमपरमन्यमित्युभौ शेषेण' (४-१०-११) इति ॥ १५ ॥

अर्घ्ये निवेदिते

५६८. अन्नस्य राष्ट्रिरसीत्यर्घ्यं प्रतिगृह्णीयात् ॥ १६ ॥

अञ्जलिना। प्रतिगृह्य च (५६०) तूष्णीं शिरसि प्रोक्षेत् ॥

५६९. यशोऽसीत्याचमनीयम् ॥ १७ ॥

प्रतिगृह्णीयादित्यनुवर्तते। प्रतिगृह्य आचामेत (७—१०)॥

५७०. यशसो यशोऽसीति मधुपर्कम् ॥ १८ ॥

मधुपर्कं कांस्यसंपुटस्थं (५६०) प्रतिगृह्णीयात् ॥ १८ ॥

**५७१. त्रिः पिबेद्यशसो महसश्श्रिया[1] इति ॥ १९ ॥**

प्रतिगृहीतं मधुपर्कं त्रिः पिबेत् । पाने मन्त्राः — 'यशसो भक्षोऽसि स्वाहा' 'महसो भक्षोऽसि स्वाहा' 'श्री (श्रीः) भक्षोऽसि श्रियं मयि धेहि स्वाहा' इति । स्वाहाकारान्तता च 'सर्वे स्वाहाकारान्ताः' (द्रा. श्रौ. सू. १-२-१०) इति वचनात् । अत्र 'श्रियाः' इति प्रतीकः उपलभ्यमानमन्त्रपाठेन विसंवदति ॥

अथवा, '··· यशसोमहसाश्श्रियः' इति पाठमाश्रित्य एवं व्याख्येयम् । 'यशसश्च महसश्च श्री (श्रीः) च यशसोमहसाश्श्रियः । अनुकरणानां द्वन्द्वे बहुवचनम् । इतिशब्दः प्रत्येकमन्वेति' इति । तथा च मन्त्रपाठानुसारिता सूत्रस्य सिद्धयति ॥

अत्र रुद्रस्कन्दः प्रथमाद्वितीयमन्त्रौ 'यशसो भक्षोऽसि यशो मयि धेहि स्वाहा' 'महसो भक्षोऽसि महो मयि धेहि स्वाहा' इति सानुषङ्गं पठति ॥ १९ ॥

**५७२. तूष्णीं चतुर्थम् ॥ २० ॥**

पिबेदिति वर्तते । चतुर्थं चतुर्थवारम् ॥ २० ॥

**५७३. भूयोऽभिपाय[2] ब्राह्मणायोच्छिष्टं दद्यात् ॥ २१ ॥**

पुनः पीत्वा ब्राह्मणाय पुत्राय शिष्याय वा दद्यात्; पुत्रशिष्यव्यतिरिक्तब्राह्मणेभ्य उच्छिष्टदानस्य निषिद्धत्वात् । तयो-

---

1. श्रिय – ख । 2. भूयोऽपि पाय – क झ ञ ट ठ ।

रभावे उच्छिष्टमद्भिः प्रोक्ष्य अब्राह्मणायापि दद्यात्। तथा च द्राह्यायणश्रौतसूत्रम् 'तदभावेऽद्भिरुसंप्रोक्ष्याब्राह्मणाय'(१-२-११) इति ॥ २१ ॥

**५७४. गां वेदितामनुमन्त्रयेत मुञ्च गामित्यमुष्य चेत्यर्हयितुर्नाम ब्रूयात् ॥ २२ ॥**

मन्त्रे अमुष्येत्यत्र अर्हयितुर्नाम षष्ठ्यन्तं ब्रूयात्। 'माता रुद्राणां' इत्यादेरप्यत्रैव विनियोगः 'माता रुद्राणामित्यनुमन्त्रयेत' (४-१०-२०) इति गोभिलवचनाल्लिङ्गाच्च ॥ २२ ॥

**५७५. एवमयज्ञे ॥ २३ ॥**

यज्ञाभिन्नस्थलेषु अर्हणकाले एवमनुमन्त्रयेत ॥ २३ ॥

**५७६. कुरुतेति यज्ञे ॥ २४ ॥**

यज्ञे तु कुरुतेति ब्रूयात्। कुरुत आलभध्वमित्यर्थः ॥

एवमर्हणप्रकारमुक्त्वा अर्हणीयानाह—

**५७७. आचार्य ऋत्विक् स्नातको राजा विवाह्यः प्रिय इति षडर्घ्याः ॥ २५ ॥**

अर्घ्या अर्हणीयाः। आचार्यो विद्यागुरुः शिष्यस्य। ऋत्विक् यजमानवृतो यज्ञनिर्वर्तको यजमानस्य। स्नातकः कृतस्नानः (३२५) आचार्यस्य। विवाह्यो वरः (८३) कन्यादातुः। राजा मूर्धाभिषिक्तः प्रजानाम्। प्रियः प्रियस्य ॥ २५ ॥

५७८. प्रतिसंवत्सरानर्हयेत् ॥ २६ ॥

उक्तानाचार्यादीन् संवत्सरमतीत्यागतानर्हयेत् ॥ २६ ॥

५७९. पुनर्यज्ञविवाहयोश्च पुनर्यज्ञविवाहयोश्च ॥ २७ ॥

यज्ञे विवाहे च संवत्सरादर्वागप्यागतानेतानर्हयेत् । ऋत्विग्विवाह्यावेवेति केचित् । द्विरुक्तिः पटलसमाप्तिद्योतिका ॥

यत्कृपा लभ्यते सद्भिः परमानन्ददायिनी ।
स्वाध्यायाचारनिरतैस्स रामश्शरणं मम ॥

कवेरकन्याकल्लोलकरालिङ्गननिर्वृते ।
श्रीवृते भारते देशे दक्षिणे निखिलोत्तरे ॥

आनन्दताण्डवपुरं प्रचकास्ति मनोहरम् ।
सामरस्यं रमावाण्यौ बिभृतो यदनुग्रहे ॥

तस्मिन् महत्तरा मूर्तसामवेदनिभा बुधाः ।
न्यवसन् वैद्यनाथार्याः श्लाघ्यशीला गुणोत्तराः ॥

आत्मजः श्रीमतां तेषामाचार्यकरुणाबलः ।
पट्टाभिरामनामाहं वृत्तिमेतां व्यरीरचम् ॥

प्राणभूतनिधिक्षोणी (1955) मितक्रैस्ताब्दसंमिते ।
जयेऽब्दे मुद्रिता सैषा भूयात्सीतापतेर्मुदे ॥

इति पट्टाभिरामार्यकृतायां खादिरसूत्रवृत्तौ सूत्रार्थबोधिन्यां चतुर्थे पटले चतुर्थः खण्डः ॥

समाप्तश्चतुर्थः पटलः ॥

खादिरगृह्यसूत्रं संपूर्णम् ॥

॥ शुभं भवतु ॥

॥ श्रीः ॥

# खादिरगृह्यसूत्राणां अकाराद्यनुक्रमणिका ।


| | सूत्राङ्कः | | सूत्राङ्कः |
|---|---|---|---|
| **अ** | | अथापरम् | १८२ |
| अकुर्वन् पौर्णमासीं | १३५ | अथापरम् | ३४५ |
| अक्षतानादाय | ३५७ | अथापरम् | ५३७ |
| अक्षीरिणः कण्टकिनः | ५१३ | अथास्याश्चतुर्थे | १८७ |
| अक्षेमे पथि वस्त्र- | ५४९ | अथैनं परिदद्यात् | २४६ |
| अक्षेमे पथ्यपेहीति | ५०१ | अद्भिरुन्मृज्य | ३८ |
| अग्नये स्वाहेति | १०६ | अधस्संवेशी | २७१ |
| अग्निमुपसमाधाय | ३० | अधीहि भोः | २५१ |
| अग्निरेतु प्रथम इति | ६० | अनकाममारं | ४९८ |
| अग्निः प्राश्नात्विति च | ३८७ | अनियुक्तं त्वहतम् | २६९ |
| अग्नीषोमीयः | १६४ | अनुगानमरहस्यानाम् | ३७० |
| अङ्गुष्ठेनानामिकया | १९६ | अनुदिते वा | १०२ |
| अजः केशप्रतिग्रहाय | २६६ | अनु द्वारं | ५२२ |
| अजो वा श्वेतः | ५२६ | अनुपूर्वमितरे | ४०० |
| अञ्जलिं कृत्वा | ४६८ | अनुपूर्वं गत्वा | २०० |
| अत्रार्घ्यम् | ८३ | अनुपृष्ठं गत्वा | ६५ |
| अथ निह्नवनम् | ४६४ | अनुपृष्ठं गत्वोत्तरतः | २०५ |
| अथ सस्तूपम् | १२२ | अनुप्रवचनीयेषु | २९५ |
| अथातो गृह्या कर्माणि | १ | अनुमतेऽनुमन्यस्वेति | ४३ |
| अथान्यास्सुहृदः | २५८ | अनुवाक्याः कुर्युः | ३६९ |

| | सूत्राङ्कः |
|---|---|
| अन्ततः | १० |
| अन्नस्य राष्ट्रिरसीति | ५६८ |
| अन्यत्र शाकमांस- | ३३६ |
| अन्वारब्धायां | ५७ |
| अप उपस्पृश्यैवं | ३५३ |
| अपरया द्वारा | ३३५ |
| अपराह्णे स्नात्वा | १३६ |
| अपरेणाग्निं | ७५ |
| अपवर्गे | ३ |
| अपः पश्येत् | ५६४ |
| अपां चोपरिष्टात् | ३९१ |
| अपोऽभिव्यख्यं | २९२ |
| अपो वा | १७४ |
| अप्रकृष्य वा | ३५ |
| अभिघार्य | १५२ |
| अभिवाद्य गुरून् | ८१ |
| अभूत्नो दूतः | ४७२ |
| अभोजनेन | १७१ |
| अभ्युक्ष्यैते | ४० |
| अमधुमांसाशी | २७२ |
| अमुष्माच्च सकृच्छ्नः | ४४५ |
| अमुष्मै स्वाहेति | १५४ |

| | सूत्राङ्कः |
|---|---|
| अमोऽसीति | ३९४ |
| अम्बरीषाद्वा | ९६ |
| अयज्ञियां | २२ |
| अरण्ये केशान् | २२८ |
| अरण्ये प्रपदं | ४८६ |
| अर्धमासमर्ध— | ४८४ |
| अर्धमासव्रती तामिस्त्रा— | ५०६ |
| अर्धमासव्रती पौर्ण— | ४९१ |
| अर्धमासव्रती पौर्ण— | ५३४ |
| अर्यमणं | ७० |
| अर्हयत्सु वा | ५५९ |
| अलक्ष्मीनिर्णोदः | ५०० |
| अलंकृतोऽहत— | ३२१ |
| अवसिक्तो दक्षिणं | ७६ |
| अवस्थानप्रभृति | ७२ |
| अवान्तरदिशां | ५३१ |
| अविद्यमाने | १७२ |
| अव्यावृत्तिं | २५ |
| अशक्तौ पेयं | ४८५ |
| अष्टकाममावास्यां | ३७५ |
| अष्टकायै स्वाहेति | ४११ |
| अष्टकायै स्वाहेति | ४२४ |

| | सूत्राङ्कः | | सूत्राङ्कः |
|---|---|---|---|
| अष्टमे वर्षे | २३१ | आदित्यं च नान्तर्दधते | २८१ |
| अष्टरात्रोपोषितः | ५४५ | आदित्यनावमिति | ५०४ |
| अष्टौ चापूपाः | ४०८ | आधिपत्यं | ५४७ |
| असंलोकी स्यात् | ५२३ | आनडुहो गोमयः | २१५ |
| असकृच्चेत | १२९ | आनीयमानायां | ५५ |
| असाविति नाम कुर्यात् | २०७ | आप इत्युन्देत | २१९ |
| असाविति नाम दध्यात् | १९३ | आप्लवनं च | ५० |
| अस्तमिते होमः | १०० | आप्लवने पुरस्तात् | २९९ |
| **आ** | | आयसान् वधकामः | ५३५ |
| आगतेष्वित्येके | ८४ | आश्वयुजीं रुद्राय | ३८० |
| आगन्त्रेति जपेत् | २४१ | आसनस्थान— | ११ |
| आग्नेयस्थालीपाकः | १६३ | आसीत नक्तम | २८८ |
| आग्रहायणं कर्म | ३९५ | आस्थाता त इति | ३२७ |
| आचार्य ऋत्विक् | ५७७ | आहृत्य वैहायसीं | १८४ |
| आचार्याधीनः | २८६ | | |
| आचार्याय भैक्षं | २५९ | **इ** | |
| आचितशतं भवति | ५१० | इदं विष्णुरिति वा | २३ |
| आज्यं जुहुयात् | १७७ | इदमहमिममिति | ५४२ |
| आज्यभागौ | १४८ | इन्द्राण्यास्स्थाली— | ४७९ |
| आज्यमधिश्रित्य | ४१ | इन्द्रामवदादिति | ५४४ |
| आज्यमुपस्तीर्य | १५० | इन्द्रियाण्यद्भिः | ९ |
| आज्यलिप्ते वा | २९७ | इमं स्तोमं | ३१ |

| | सूत्राङ्कः | | सूत्राङ्कः |
|---|---|---|---|
| **ई** | | उन्दनप्रभृत्येवं | २२५ |
| ईक्षकावेक्षण– | ७४ | उपतापिनीषु | ५४८ |
| **उ** | | उपताम्य कल्याणं | ४६० |
| उक्तमुपनयनम् | २६७ | उपरिष्टात्सान्निपातिके | ४८२ |
| उक्तमुपस्तरणा– | ४२३ | उपविश्य दक्षिण– | २५० |
| उक्त्वोदङ्ङावर्तेत | ४५९ | उपविश्य दर्भाग्रे | ३७ |
| उत्तमायां शाकं | ४१० | उपविश्यौष्ठापिधानेति | ३२५ |
| उत्तरतोऽग्नेः | २३८ | उपस्तीर्यापः | ३८९ |
| उत्सृज्यापः | २४३ | उपेत्याचार्यं | ३२४ |
| उदगग्रे | ३९ | उपोषिताय | २९० |
| उदगयनपूर्वपक्ष– | २ | उभावित्येके | ३०८ |
| उदगयने च | ३७६ | उभौ शेषेण | ५६७ |
| उदग्द्वारं | ५०५ | उल्कापाते | ३७८ |
| उदङ्ङुत्सृप्य कुशली– | २२७ | उष्णेनेत्युष्णोदकं | २१८ |
| उदङ्ङुत्सृप्य प्रत्यक्– | ४१७ | **ऊ** | |
| उदङ्मुख आचार्यः | ३०० | ऊर्जं वहन्तीरिति | ४७० |
| उदञ्चं विष्टरं | ५६२ | ऊर्ध्वं त्रिरात्रात् | ८८ |
| उदपात्राण्यपसलवि | ४५७ | ऊर्ध्वं प्रेक्षन् | ३५९ |
| उदिते च | १०१ | ऊर्ध्वमाग्रहायण्याः | ४०६ |
| उदुत्तममिति | ३१९ | | |
| उद्यन्तं त्वेति | ५०५ | **ऋ** | |
| उद्यन्निति | ३१६ | ऋतुकाले | ९१ |

| | सूत्राङ्कः | | सूत्राङ्कः |
|---|---|---|---|
| ए | | कंसो वासो रुक्मश्च | २९४ |
| एका कर्षूः | ४७७ | कम्बूकान् सायं | ५४१ |
| एकादशे क्षत्रियम् | २३३ | कर्षूश्च | ४५० |
| एकैकमुभयतः | १२३ | कामं त्वधियज्ञं | २१ |
| एकैकस्मात् | ४३२ | काम्येषु षड् भक्तानि | ४८० |
| एतमुत्यमिति | ३९३ | काण्वं तु कठ- | ३७९ |
| एवं चौलोपनयन- | ५९ | कुमारी ब्रह्मचारी | १८५ |
| एवं ब्रह्मवर्चसकामः | ३०१ | कुरुतेति यज्ञे | ५७६ |
| एवं ब्रह्मवर्चसकामः | ४८७ | कुशलीकृतं | २३७ |
| एवं यजनीयप्रयोगेषु | ४८३ | कृष्णभक्षः | २८५ |
| एवं संवत्सरे | ५३२ | कृष्णवस्त्रः | २८४ |
| एवमयज्ञे | ५७५ | कृष्णा च गौः | ५२५ |
| एवमेवापरस्मिन् | ५०८ | कृसरस्थालीपाकं | १८९ |
| एष एव पिण्ड- | ४७४ | को नामासीति | २४२ |
| ऐ | | क्षुधे स्वाहा | ५५० |
| ऐन्द्रो माहेन्द्रो वा | १६५ | ख | |
| ओ | | खादिरानायुष्कामः | ५३६ |
| ओषधय इति | २२१ | ग | |
| क | | गां च | ५६१ |
| कंसात् पराभिः | ४३५ | गां वेदितां | ५७४ |
| कंसे रसं | ४३० | गृहाः पत्नी | १११ |
| कंसे समवदाय | ४५३ | गृह्येऽग्नौ | ४७५ |

| | सूत्राङ्कः | | सूत्राङ्कः |
|---|---|---|---|
| गोदानव्रातिक— | २७८ | तत उत्थाय | ३५६ |
| गोदाने चौलवत् | २६२ | तत ऊर्ध्वं | ३७२ |
| गोयुक्तं रथं | ३२६ | तत एवातिप्रणयेत् | ४७६ |
| गोऽश्वाविमिथुनानि | २६४ | ततो यथार्थं स्यात् | ९० |
| गोष्ठे पशुकामः | ३०२ | ततो यथार्थं स्यात् | ४०५ |
| गौरे भूमिभागे | ५११ | तत्र नापितः | २१४ |
| गौर्दक्षिणा | ८२ | तत्रर्त्विक् ब्रह्मा | १८ |
| गौर्दक्षिणा | २३० | तथालङ्कारः | २७० |
| गौर्दक्षिणा | २९३ | तथैव पिण्डान् | ४५८ |
| ग्रामे तृतीयां | ५४६ | तदभ्युक्ष्य | २९ |
| ग्रीवायां प्रतिमुच्य | ५ | तदादेशं | ४३९ |
| **च** | | तदारम्भात् | २८ |
| चतुर्गृहीतं | ४३४ | तदेव मन्त्रान्ते | २०८ |
| चतुर्थ्यादित्यं | ४९६ | तद् गुह्यम् | १९४ |
| चरुस्थाल्या वा | १०५ | तद्यज्ञवास्तु | १५८ |
| **ज** | | तन्त्रीं प्रसारितां | ३४९ |
| जननाज्ज्योत्स्ने | १९८ | तयोराप्लवनं | ५१ |
| जननादूर्ध्वं | २०३ | तस्मा अन्वाह | २५२ |
| जपेद्वा लघुषु | २९८ | तस्माद्यत् | १३८ |
| जातवेद इति | ४३८ | तस्मिन्नेकैकं | ४५२ |
| **त** | | तस्य कणान् | ५०७ |
| तं साम्नौ | ६९ | तस्य शेषं | ३८८ |

| | सूत्राङ्कः | | सूत्राङ्कः |
|---|---|---|---|
| तस्याचतुर्विंशात् | २३६ | तेनेममिति | ३०९ |
| तस्याद्वात्रिंशात् | २३४ | तेनैनां | ८९ |
| तस्याषोडशात् | २३२ | तैलं सुरभि च | ४६२ |
| तस्याः पत्नी | ४१९ | त्रिराचम्य | ७ |
| तानपरिवर्तयन् | ४०९ | त्रिरात्रं क्षारलवणे | ८५ |
| ताभिश्शीतोष्णाभिः | ३०६ | त्रिरात्रं क्षारलवणे | २६१ |
| तां पुरस्तात् | ४१३ | त्रिर्देवेभ्यः | १४२ |
| तासां पुरस्तात् | ४४८ | त्रिर्भृगूणां | ३९० |
| तासु स्थालीपाकाः | ४०७ | त्रिसन्निपाते | ३७४ |
| तिर्यङ्ङितरजनेभ्यः | ३६० | त्रिः पिबेत् | ५७१ |
| तिष्ठेदास्तमयात् | २६० | त्र्यवरा धूमे | ५४० |
| तिष्ठेद्दिवा | २८७ | त्र्यायुषमिति | २२६ |
| तिस्रो दर्भपिञ्जूलीः | ४६१ | **द** | |
| तूष्णीं च | ३१२ | दक्षिणजान्वक्तः | ४२ |
| तूष्णीं च | ३१५ | दक्षिणतस्तिष्ठन् | २४० |
| तूष्णीं चतुर्थम् | ५७२ | दक्षिणतः प्राचीं | २७ |
| तूष्णीं तु | १२७ | दक्षिणतोऽग्नेः | २० |
| तूष्णीं प्रागुदीचीं | १०७ | दक्षिणद्वारे | ५२१ |
| तूष्णीं स्त्रियाः | २१२ | दक्षिणं दक्षिणमिति | ५६६ |
| तृतीयया चन्द्रमसि | ४९५ | दक्षिणपश्चिमे | ३५४ |
| तृतीये वर्षे | २१३ | दक्षिणपूर्वे | ४४३ |
| तेनाभ्यागताः | ३८३ | दक्षिणमंसं | १८१ |

| | सूत्राङ्कः | | सूत्राङ्कः |
|---|---|---|---|
| दक्षिणमंसं | २४५ | न गोयुक्तं | २७५ |
| दक्षिणमंसं प्रजा– | २४७ | न ग्राम उपानहौ | २७६ |
| दक्षिणेन पाणिना | १४ | न चापोऽप्युप– | २८२ |
| दक्षिणोत्तानौ | ४६७ | नमः पृथिव्या इति | ३९६ |
| दक्षिणोद्वास्य | ४४६ | न रजस्वलया | ३३३ |
| दधि चेत् पयो वा | १०४ | नवमीं दशमीं वा | ४४२ |
| दर्भसम्मितं | ५१४ | नवयज्ञे | ३८५ |
| दर्भानाज्ये | १५७ | न समानर्ष्या | ३३४ |
| दार्शं चेत् | १३४ | न सव्यात् | ४२६ |
| देवता मन्त्रा– | १७८ | न स्त्रस्तरः | ४७८ |
| देव सवितः | ४४ | न स्विष्टकृतः | १५३ |
| द्वन्द्वं पात्राणि | ४७३ | नागन्धां स्रजं | ३३९ |
| द्वादश ग्रामाः | ५३९ | नाचरिष्यन्तं | २६८ |
| द्वादशे वैश्यम् | २३५ | नाजातलोम्न्योप– | ३३१ |
| द्वारि | ११९ | नाज्यभागौ | ६१ |
| द्वितीयया | ४९४ | नात्र परिसमूह– | १०९ |
| द्विर्मनुष्येभ्यः | १४३ | नादित्यव्रतमेकेषाम् | २७९ |
| द्विस्तूष्णीम् | २०२ | नायुग्वा | ३३२ |
| **ध** | | नाव्रत्यमाचरेत् | १३९ |
| धाना दधि च | ३६७ | नास्य कामे | २७४ |
| **न** | | नित्यप्रयुक्तानां | ४८१ |
| न क्रोशः | ४२७ | निनयेदपां | ३५२ |

| | सूत्राङ्कः | | सूत्राङ्कः |
|---|---|---|---|
| निर्मन्थ्यो वा | १५ | पाणिग्राहस्य | ५६ |
| नेड्यौ स्थः | ३२२ | पादयोर्द्वितीयया | ५६३ |
| न्यग्रोधशुङ्गां | १८३ | पादावभ्युक्ष्य | ८ |
| न्यञ्चौ पाणी | ३९८ | पायस एव वा | ५२७ |
| न्यञ्चौ पाणी | ४०२ | पायसाच्च | ३३७ |
| **प** | | पायसो हविः | ५२४ |
| पञ्चम्यादित्यं | ४९७ | पार्थिवं कर्म | ४९२ |
| पत्नी जुहुयात् | ११० | पिण्डप्रभृति | ४६३ |
| पयस्यवनयेदाज्यं | ३८२ | पुंसोऽग्रे | ३४७ |
| पलाशानि वा | १७३ | पुनर्यज्ञविवाहयोः | ५७९ |
| पवित्रे अन्तर्धाय | ४२० | पुष्टिकाम एव | ३४३ |
| पशुरेव पशोः | ४४० | पुष्टिकामो गाः | ३४१ |
| पशूनां चेत् | ५५७ | पूर्णपात्रं दक्षिणा | १६१ |
| पशूनां त्वेति | २११ | पूर्णहोमं | ५४३ |
| पश्चाच्च पश्चावत्ती | १५१ | पूर्वपक्षो | १७० |
| पश्चादग्नेर्दक्षि- | ४४७ | पूर्वस्यां कर्ष्वां दक्षि- | ४६५ |
| पश्चादग्नेर्न्यञ्चौ | ३२ | पूर्वस्यां कर्ष्वां पितुः | ४५५ |
| पश्चादग्नेर्यत्र | १२ | पूर्वा मातॄ | ६६ |
| पश्चादग्नेस्स्वस्तरं | ३९९ | पूर्वे भागे | २६ |
| पश्चादग्नेस्स्वस्तरं | ४५१ | पूर्वोपक्रमं | ३६ |
| पश्चाद्दर्भान् | ३४ | पृथङ्गोक्षणाभ्याम् | ४२९ |
| पाकयज्ञ इत्याख्या | १७ | पृथिवी वायुः | १२६ |

| | सूत्राङ्कः | | सूत्राङ्कः |
|---|---|---|---|
| पौर्णमासोपक्रमौ | १३३ | प्राजापत्यया च | ६३ |
| प्रजामिति | १९० | प्रातरह्नस्येति | ५०३ |
| प्रतिकामं | ४७ | प्रातराहुतिं | १४० |
| प्रतिष्ठिते बस्तौ | १९१ | प्रायश्चित्तं | १७६ |
| प्रतिसंवत्सरान् | ५७८ | प्राश्य वापयेत् | ३२० |
| प्रत्यागता इमाः | ३४२ | प्रोक्ते नक्षत्रे | ७९ |
| प्रत्यागताय | ३२९ | प्रोक्ष्योल्मुकेन | ४१६ |
| प्रत्येत्यानवेक्षन् | ३६१ | प्रौष्ठपदीं | ३६३ |
| प्रथमगर्भे | १७९ | प्लक्षशाखासु | ४३१ |
| प्रथमयादित्यं | ४९३ | फ | |
| प्रदक्षिणमग्निं | ८० | फलप्रचयनो— | ३३८ |
| प्रदोषे पायसस्य | ३९७ | फलीकरणानां | १२५ |
| प्रपदं जपित्वा | ४६ | ब | |
| प्रयच्छत्यस्मै | २५४ | बलीन्नयेत् | ११५ |
| प्रसूतायां | ४२२ | बहिरन्तर्वा | ११६ |
| प्रागस्तमयो— | ९९ | बहुधा चेत् | १३० |
| प्रागुदीचीं | ७७ | बहुयाजिनो वा | ९७ |
| प्राग्द्वारं धन्यं | ५१९ | बृहत्तृणैर्बल्यम् | ५१५ |
| प्राकुत्क्रम्य | ३५८ | ब्रह्मचर्यमासमाप्तेः | ५०९ |
| प्राङ्नाभिकृन्तनात् | १९५ | ब्रह्मचारी वेदं | ४९ |
| प्राङ् वोदङ् वा | ५३८ | ब्रह्मचार्यसीति | २४९ |
| प्राचीं प्रयाय | ३२८ | ब्राह्मणकुले | ७६ |

| | सूत्राङ्कः |
|---|---|
| ब्राह्मणस्सहोद– | ५३ |
| **भ** | |
| भद्रमिति | ३४० |
| भद्रान्न इति | ३९२ |
| भार्या पुत्राश्च | ४०१ |
| भुक्त्वोच्छिष्टं | ८७ |
| भूयोऽभिपाय | ५७३ |
| भैक्षं चरेत् | २५६ |
| **म** | |
| मणिकदेशे | ११७ |
| मधुपर्कं | ५५८ |
| मध्यमं पिण्डं | ४७१ |
| मध्यमायां गौः | ४१२ |
| मध्यमायां पिता– | ४५६ |
| मध्ये | ११८ |
| मध्ये वेश्मनः | ५२८ |
| मन्त्रान्तमव्यक्तं | १५ |
| मन्त्राभिवादात्तु | ५२ |
| महाव्याहृतीश्च | २५३ |
| माक्षा नमस्ते | ११३ |
| मातरमग्रे | २५७ |
| माता च कुमारं | २१६ |
| मात्रे प्रथमं | २०९ |
| मानदन्तव्यः | १३७ |
| मानस्तोक इति | ३८१ |
| मृदुतृणैः पशव्यम् | ५१६ |
| मेक्षणेन प्रदक्षिणं | १४५ |
| मेखलाधारण– | २७७ |
| मैथुनक्षुरकृत्य– | २७३ |
| **य** | |
| यजतीये जुहुयात् | ४९९ |
| यज्ञियस्य वृक्षस्य | ४२१ |
| यज्ञोपवीतं | ४ |
| यत्ते सुसीम इति | २०१ |
| यत्र वा स्वयंकृताः | ५१८ |
| यत्रोदकं | ५१२ |
| यथा मा न प्रधक्ष्यतीति | २९१ |
| यथा वानाहिताग्नेः | १६६ |
| यथोक्तं पशुकामः | ४८८ |
| यथोत्साहं वा | १६२ |
| यदपामिति च | ३११ |
| यवमतीभिरद्भिः | ४१५ |
| यशसो यशोऽसीति | ५७० |
| यशोऽसीति | ५६९ |

| | सूत्राङ्कः | | सूत्राङ्कः |
|---|---|---|---|
| यशोऽहमिति | ५०२ | वह वपामिति | ४३७ |
| यस्मिन्नग्नौ | ९३ | विद्युत्स्तनयित्नुपृषि— | ३७३ |
| यस्मिन् वान्त्यां | ९४ | विद्युत्स्तनयित्नुवर्जम् | ३७१ |
| या तिरश्चीति | १९२ | विपरीतमितरे | १४९ |
| याश्च परास्सप्त | ५२९ | विप्रोष्याङ्गात् | २१० |
| ये चरन्ति | २८० | विषवता दष्टं | ५५३ |
| येन पूषेति | २२३ | विष्टरपाद्या— | ५६० |
| येन श्रियमिति च | ३१४ | विष्णोरित्यादर्शे | २२० |
| येनेच्छेत्सहकारं | ४९० | विहरन्ननुसं— | ३१८ |
| येऽप्स्वित्यपां | ३१० | वृद्धशीली स्यात् | ३३० |
| यो रोचन इति | ३१३ | वैणवं दण्डं | ३२३ |
| **र** | | व्रीहिप्रभृत्या | १३२ |
| रात्रिस्सायमाहुतेः | १६८ | **श** | |
| **ल** | | शक्करीणां | २८३ |
| लोहितेनेत्यनु— | ३४८ | शतायुधायेति | ३८६ |
| **व** | | शय्यामनु | १२० |
| वत्समिथुनयोः कर्णे | ३४६ | शाताभिर्मण्डल— | ५१७ |
| वत्समिथुनयोः पुरी— | ५५१ | शुचिनाच्छाद्य | १९९ |
| वत्सांश्च मातृभिः | ३८४ | शूर्पेण शिष्टान् | ७३, ३५५ |
| वर्चं वा | १२१ | शृतमभिघार्य | १४६ |
| वशङ्गमाविति | ५३३ | शेषमद्भिस्सार्धं | १२४ |
| वसन्तं रात्रौ | ३३ | श्रावणीमित्येके | ३६४ |

| | सूत्राङ्कः | | सूत्राङ्कः |
|---|---|---|---|
| श्रावण्यां | ३५० | सर्वत्र कुर्यात् | १५९ |
| श्वोभूतेऽश्नत – | ३६२ | सर्वत्रैतत् | ४८ |
| श्वोभूते प्राधी – | ३६८ | सर्वत्रोपरिष्टात् | ६२ |
| **स** | | सर्वमहः प्रात– | १६७ |
| संज्ञप्तायां | ४१८ | सर्वस्य त्वन्नस्या– | १३१ |
| संप्रजातासु | ३४४ | सर्वस्य त्वन्नस्यै– | १२८ |
| संवत्सरमेकेषां | २८९ | सर्वाङ्गेभ्यः | ४२५ |
| सकृत्पितृभ्यः | १४४ | सर्वाण्येवं | १४७ |
| सकृदायसेन | २२४ | सर्वेषां वा गौः | २६५ |
| सकृद्गृहीतमञ्जलिं | ६७ | सर्वोऽपरपक्षः | १६९ |
| सकृद्गृहीतान् व्री– | ४४४ | सर्वौषधेन | ३०४ |
| सकृद्गृहीतान् सक्तून् | ३५१ | सलोमं वापयेत् | २६३ |
| सब्रह्मचारिणि | ३७७ | सव्यं पादं | ५६५ |
| सभायां यश– | ३०३ | सव्यं प्राचीनावीती | ६ |
| समस्ताभिश्चतुर्थीं | ५८ | सव्यं सक्थि | ४२८ |
| समस्येद्वा | ३१७ | सव्येन सव्यं | २४८ |
| समाप्तायां दक्षिणैः | ४०३ | सव्येनोल्मुकं | ४५४ |
| समाप्तायां संभ– | ९२ | सव्योत्तानौ | ४६६ |
| समिध आधाय | ४५ | सहाशिरसं | १३ |
| समिधमादध्यात् | २५५ | सहस्रबाहुरिति | ४८९ |
| समिधमाधाय | १५६ | सायमाहुत्युप– | ९८ |
| सर्पिश्च मेधां | १९७ | सिद्धे सायं प्रातः | ११२ |

| | सूत्राङ्कः | | सूत्राङ्कः |
|---|---|---|---|
| सुरभिमिश्र | ३०५ | स्वस्त्ययनम् | ५५५ |
| सुहृद्वा कश्चित् | ६८ | स्वस्त्ययनानि | ४०४ |
| सूत्रतन्तून् | ४६९ | स्वाहान्ता मन्त्राः | १६ |
| सूर्यस्येति प्रद- | २४४ | स्विष्टकृतः | १५५ |
| सूर्यायेति प्रातः | १०८ | ह | |
| सोमं राजानं | ३६६ | हतस्त इति | ५५६ |
| सौविष्टकृतीं | ४३६ | हरितगोमयेन | ५५२ |
| स्तम्बे निदध- | २२९ | हविरुच्छिष्टं | १६० |
| स्तृणुयात् | ४४९ | हविर्निर्वपेत् | १४१ |
| स्थालीपाकस्य | ४४१ | हविष्यमन्नं | ८६ |
| स्थालीपाकाच्च | ४३३ | हविष्यस्यान्नस्य जु- | ११४ |
| स्नातकस्संविशन् | ५५४ | हविष्यस्यान्नस्या- | १०३ |
| स्नातां संवेश्य | १८६ | हुतं हि | १७५ |
| स्नातामहतेनाच्छाद्य | ५४ | हुते तेनैव | ७१ |
| स्नातामहतेनाच्छाद्य | १८० | हुत्वा कोऽसीति | २०६ |
| स्नातामहतेनाच्छाद्य | १८८ | हुत्वा चानुमन्त्र- | ४१४ |
| स्नाप्य कुमारं | २०४ | हुत्वा दिशां | ५३० |
| स्वधित इति | २२२ | हुत्वायमगात् | २१७ |
| स्वयं चोपरि | २३९ | हुत्वोपनयनवत् | ३६५ |
| स्वयं वा मन्त्राभि- | ३०७ | हुत्वोपोत्तिष्ठतः | ६४ |
| स्वयं हौत्रम् | १९ | हौत्रब्रह्मत्वे | २४ |




